[illegible]
विचार किया गया। ......राजनीति भी इससे अछूती नहीं रह सकती थी।......

......भारतमें "केवल अनियन्त्रित राजाओंका राज्य चल रहा था" यह एक भ्रान्तिपूर्ण विचार है।......राजाभी चुने जाते थे।......लोग नियन्त्रण करते थे।......मनमाना राज्य नहीं कर सकते थे।

......भारतमें गणतंत्र Republics भी थे। कितने ही पर्यंतक रहते थे......और इस देशमें अनेकानेक स्थानोंपर गणतंत्र राज्य करते थे।

यह सब विचार एक जगह नहीं, अनेक अनेक स्थानोंपर पढ़ा है। यह साहित्य संस्कृत, पाली और प्राकृतमें भी है।

( शेष पृष्ठ ३ पर )

# भारतीय-राजनीति-कोषः

## कालिदास-खण्डः

सुबोधटिप्पणीभिः, पारिभाषिकशब्दानाम् अर्थप्रदानेन,
सूच्यादिभिश्च परिष्कृतः

सम्पादकः
वेंकटेशशास्त्री जोशी

शाके १८७६ ]

मूल्यम्
अष्टरूप्यकाणि

# प्रस्तावना

श्री

पुराणमित्येव न साधु सर्वम्
न चापि काव्यं नवमित्यवद्यम् ।
सन्त परीक्ष्यान्यतरद् भजन्ते
मूढः परप्रत्ययनेयबुद्धिः ॥ —कालिदास ॥

वर्षद्वयात् प्राक् श्रीवेङ्कटेशशास्त्रिण मनिकटे आगत्य स्वकीया राजनीतिकोपयोजना विशदीचक्रु । तत्क्षणे एव अस्या योजनायाः महत्त्वम् उपयुक्तता च समधिगम्य "सर्वथा अनुष्ठेयोऽय प्रयत्न" इति स्वकीयाभिप्रायः मया स्फुटीकृत ।

कथमिति चेत्, महानय प्राचीनो भारतो देश । अस्य देशस्य परम्पराऽपि महती । अत्र भारते विविधानि राज्यानि सम्पन्नानि आसन् । एतद्विषये संस्कृतसाहित्य विपुलेन विचारधनेन परिपूर्णं वर्तते । किन्तु तत्सर्वं नैव एकत्र सङ्कलितमुपलभ्यते । अर्थशास्त्र चाणक्यमुने, तथैव च कामन्दकीयो नीतिसार, शुक्रनीत्यादयश्च केचन विरला ग्रन्था वर्तन्ते, येषु राजनीतिविषयक साहित्यम् उपलभ्यते । वेदेषु तथैव च महाभारत–रामायण–वायु–विष्णुपुराणादिषु बहुषु ग्रन्थेषु, तथैव बाण–कालिदास–शूद्रकादिविरचितकाव्यनाटकादिप्रबन्धेष्वपि तत्र प्रासङ्गिकसम्बन्धेन निबद्धा विचाराः अपि उपलभ्यन्ते ।

सम्प्रति जगति पाश्चात्यानामेव गौरवम् । तेषामेव विचारसरणिः शिरोभूता दृश्यते । स्वतन्त्रे भारते यदा शासनसविधान विरचितमस्मद्धुरीणैः तदा प्रथममेवोद्घोषित यद् Sovereign Democratic republic इति आङ्ग्लशब्दावलिना सूचितमस्मच्छासनस्वरूपमिति । वय पृच्छाम, के ते भाग्यशालिन, अस्मिन्भारते ये अस्या शब्दावल्या अभिप्राय सम्यक्तया ज्ञातु क्षमा । यैस्तावत् आङ्ग्लभाषा आङ्ग्लशास्त्राणि च सम्यक्तया अधीतानि ते तावत् शतान् पञ्च दश वा जनाः स्यु । परमन्या सहस्रशो वर्तन्ते प्रजा । कि तासा प्रयोजन भवेत् 'Sovereign' इत्यादिशब्दसहत्या । पर ता एव प्रजा नृपप्रधानामात्यसचिवादीन् परंपरागतशब्दान् विनायास जानन्ति इत्यत्र न सशय । एतै भारतीयपरंपराप्राप्तै शब्दैः तेषा प्रयोजन भवतीत्यत्र न सशय. । एव परंपराबल परित्यज्य को वा लाभ, भक्तीमाम् ?

अन्यच्च– नूतन युगदर्शन जगति सजातमित्यत्रापि न सन्देह । केवला प्राचीन-परपरा ज्ञात्वैव अद्यतनमस्माक सर्वं कार्यं भवेत् इत्यपि वक्तु दु शकम् ।

यतो हि पाश्चात्यैरपि बहवो नूतना विचारा शास्त्राणि च प्रत्यक्षीकृतानि दृश्यन्ते । सर्वथा नोपेक्षणीयमेतद्विचारधनम । अस्मदीया महती परम्परा एकत, अन्यतश्च पाश्चात्याना सामर्थ्यशीला सर्वस्मिन्नपि जगत्यधिरूढा विचारपरम्परा । अस्मिन्द्वैधीभावाकीर्णे प्रसङ्गे किमस्माक कर्तव्यम् ?

स्पष्टमेव हि तत्—निखिल ज्ञान भारतीय तदितर च अस्माभि स्वतन्त्रया बुद्धचा आलोडच यावदस्माकमनुकूल तावत्सग्राह्यमनुष्ठेय च । केवलमनुकरण न कदापि स्पृहणीय कल्याणकर च भविष्यति, इत्यपि सर्वेषा प्रत्यक्षमेव । सर्वदा विचार-परैरेव च भवितव्यम् । तदर्थमेव एष राजनीतिकोषरचनाप्रयत्न । राजनीतिस्ताव-ज्जीवनस्य प्रधानमङ्गम् । शासननिबद्धा एव भवन्ति सर्वा प्रजा । तासा सुख स्वास्थ्य च प्राधान्येन शासनाधीनम् । अत एव राजनीतेर्महत्व विद्यते ।

*भारते योऽनुभवः भारतीयैः राजनीतिविषये सगृहीत, तस्याभ्यासस्य अस्मद-*र्थेऽतीवोपकारक भविष्यति इत्यत्र न सन्देहलेशोऽपि ।

अयमेवानुभव सर्वस्यापि सस्कृतवाङमयस्य विषये निवेदयितु शक्य । प्रथम तावत् तस्य साकल्येन सङ्ग्रहः आवश्यक । यानि कानिचिद्वचनानि यस्मिन्कस्मिश्चि-द्ग्रन्थे यत्र कुत्रापि वा भवन्तु उपलब्धानि स्युः, तानि सशोध्य एकस्मिन् स्थले स्थापनी-यानि । तद्विना समीचीनतया अभ्यासो न शक्य । अन्यच्च कालनिश्चय यावत्पर्यन्त-मसन्दिग्धतया ज्ञातु शक्यते तावत्पर्यन्त तानि तानि वचनानि कालदृष्ट्यापि विभक्तीकर्तव्यानि । तथा कृत चेत् तर्ह्येव समकालिकानि सर्वाणि राजनीतिविषयक-वचनानि एकपदे एव अभ्यासयोग्यानि भविष्यन्ति । याश्च सज्ञा यानि वा पदानि तेषु तेषु वचनेषु दृष्टिपथमागमिष्यन्ति तेषा सर्वेषा सम्यग्विचारेणार्थनिश्चय कर्तुं सुकरो भविष्यति । यथा आङ्गलभाषाया Democracy शब्द ग्रीकभाषाया आगत । तत्र 'डिमॉस्' तथा 'क्रातीन्' इति पदद्वय मूल वर्तते । अत्र 'डिमॉस' पदेन जनाः अथवा प्रजा, 'क्रातीन्' पदेन च शासनमिति अर्थस्पष्टीकरणेन 'डिमॉक्रसी' इति पदस्य प्रजाशासनमित्यर्थ सिद्धो भवति । तथैव च भारतीयराजनीतौ 'राष्ट्र' 'प्रकृतिः' इत्यादीनां पदाना वैदिककालमारभ्य अद्य यावत् ये ये अर्था आसन् तेषु अर्थपरिवर्तन, प्रसङ्गविशेषेषु च अर्थभेदा कथ वा सभाव्यन्ते इत्यादि ऐतिहासिक-विमर्शपद्धत्यनुसार ससाधनीय भवति इत्यत्र न कस्यापि वैमत्य भवेत् । तदिदं नैकस्य कस्यापि विदुष सुसाध्यम् । तदर्थं नैकेषा विदुषां साहाय्यमपेक्ष्यते ।

अत्र प्रथममस्माभि कालिदासकृतकाव्यनाटकादीनि गमवन्तोऽयं आवश्यक सपसप्रह इत: । अत्र विदुषामभिप्रायान् ज्ञात्वैव अग्रे पद विधास्यामीत्यपि

मुनिश्चितमेव। अयं प्रथम प्रयत्न श्रीवेंकटेशशास्त्रिप्रभृतिभिः विदुषा पुरस्ताव् उपस्थाप्यते । श्रीमता राष्ट्रपतिपदमलङ्कुर्वता करकमले अय स्वल्प प्रयत्नः अस्माभि. सर्वैरपि समर्प्यते। अहो भाग्यमस्माक यत् अद्यतनः सुमङ्गलावसरः उदितः। सर्वेषामपि विदुषा सन्तोषाय भवतु एष यत्न इति प्रार्थयते–

दत्तो वामन पोतदार
'लोककल्याण'
कार्तिके वदि तृतीया १८७६
पुण्यपत्तनम्।

–दत्तशर्मा

# पुरस्कारः ।

भारतस्य स्वातन्त्र्यप्राप्त्यनन्तरम् प्राचीनभारतीयवाङ्मयविषये सर्वत्रैव आदरः प्रवृद्ध इति तु सर्वेषाम् विद्वद्वदविचमोत्तमानाम् प्रत्यक्षम् । विशेषत सस्कृतभाषाया ये ये सशोधनविषया तेषु विदुषा तथा शासनकर्तृणामपि समधिकमेव प्रवृत्ति प्रादुर्भूता । प्राक् पारतन्त्र्यकाले यदौसीन्यमासीत् तत्तु क्वापि प्रलय गतम् । अत एव अस्मिन् कार्यक्षेत्रे नवनवीनाः विविधा सस्था मौलिक कार्यं कर्तुं प्रवृत्ता । विविधाना विषयाणा सङ्कलनम्, विभजन च अस्मिन् सशोधनविभागे अत्यन्तम् आवश्यकम् भवति । नैकेषु विविधविषयेषु ग्रन्थेषु य समान भाग तस्य एकत्र सङ्कलनम् इति एकम् कार्यम्, अन्यत् तु एकस्मिन् एव विषये वर्तमाना विविधा सिद्धान्ता तेषाम् विविधै. अर्थै विशदीकरणम् इति । कालत देशत च शास्त्रसम्बन्धिन्य कल्पना विविधा भिन्ना च वर्तन्ते इत्यपि जानन्त्येव विद्वांस ।

गते पञ्चाशद्वर्षात्मके काले भारते राज्यशास्त्रविषयका ये ये सिद्धान्ता प्रतिपादिताः, यया च विमर्शपद्धत्या तेषा शास्त्रीयत्व सम्पादितम्, त सर्वमपि पाश्चात्याना राज्यशास्त्रानुसारि इत्यत्र न कस्यापि वैमत्य भवेत् । यद् राज्यशास्त्रम् अत्र विद्यालयेषु, महाविद्यालयेषु च विद्यार्थिभ्य प्रतिदिन पाठ्यते, यस्य च प्रचार प्राकृतेषु जनेषु भवति तदिद सर्वम् अपि पाश्चात्यशास्त्रावलम्बि एव । एतद्विषयक वाङ्मयमपि भारते पाश्चात्यराज्यशास्त्रम् अवलम्ब्य एव प्रवर्तते । चाणक्यस्य अर्थशास्त्रम्, महर्षे व्यासस्य महाभारतम् शुक्रनीति, कामन्दकीयो नीतिसारः इत्यादि सर्वम् अतीव स्थूलदृष्ट्या परामृश्यते । तत्कालीना समाजस्थिति लोकव्यवहार, भौतिकसाधनानि इत्यादिविषयेषु शास्त्रीयदृष्ट्या विमर्श विविधेषु ग्रन्थेषु कृत इति यद्यपि सत्यम् तथापि तत्र नवीना ऐतिहासिकविमर्शपद्धति शास्त्रीयसशोधनपद्धति च अतीव अल्पप्रमाणेनैव वतत । पाश्चात्यभाषायाम् समाजशास्त्रम् अधिकृत्य ये ये विषया. प्रतिपाद्यन्ते तान् अधिकृत्य भारतेऽपि अवश्यम् सशोधनादि कर्तव्यम् इति मन्मति । "अद्यतना विचारकल्पना प्राक्तनविचारकल्पनाद्यपेक्षया अत्यन्त भिन्ना. वर्तन्ते, भविष्यत्कल्पनाद्यपेक्षया च भिन्ना स्यु " इति या विचार पद्धति सा इतिहासपरम्पराम् आदृत्य एव स्वीकर्तव्या भवेत् । कोऽपि राजकीय राष्ट्रीय वा विचारः भवतु, स सामाजिकानाम् परिवर्तनशीलानाम् आचारव्यवहारादीनाम् प्रथम परिवर्तनं कृत्वैव अनन्तरं विकसितो भवति इति तु सर्वसम्मतमेव । विविधाना शास्त्रीयाणां सिद्धान्तानां प्राक्तन स्वरूपम् किम् आसीत्, भविष्यत्काले किम् स्यात् एतदवलोकन नाम विचारसोपाना, सशोधनकर्मणि रतानाम् कार्यम् । एतत् कार्यं इतरैव राज्यशास्त्रेभ्य इतरेभ्यः नेतृभ्य च विद्वद्भि परया विशदीकृत्य सन्देष्टव्यो

भवति। सामान्यनीतिविषयिण्य अथवा राजनीतिविषयिण्य कल्पनाः भवन्तु, ता सर्वा अपि यद्यपि प्रगमनशीला, देशकालानुसार च भिन्नभिन्नाः, तथापि मानववश अथवा समष्टिरूप मानव, गङ्गाप्रवाहवत धीरगम्भीर मन्द मन्दम् पदक्षेप करोति। अत वैदिककालम् आरभ्य अद्ययावत् सर्वेषु अपि विषयेषु कथ कया रीत्या च परिवर्तनम् अभूत् इत्येतत् ऐतिहासिकविमर्शपद्धत्या सूक्ष्मेक्षिकया अवश्यम् अवलोकनीयम्।

इममेव भव्य व्यापक हेतु मनसि निधाय भारतीय राजनीतिकोशमण्डलद्वारा कार्यं प्रचाल्यते। **संस्कृतभाषायाम्, तथैव पालीप्राकृतादिभाषासु ये ये राजनीतिविषयकाः सिद्धान्ताः** इतस्ततः प्रसृता वर्तन्ते तेषां, ऐतिहासिकविमर्शपूर्वक सशोधन सम्पादन च कर्तव्यम् इति अस्य मण्डलस्य प्रधान कार्यम्। कालदृष्ट्या देशदृष्ट्या अपि एतत्कार्यम् अतीव विस्तृत वर्तते। आपञ्चपसहस्रवर्षम् जेजीयमान भारतवर्षस्य ज्ञात कालखण्ड, खण्डप्रायम् च इदमस्माक राष्ट्रम्, सर्वस्पर्शी च राजनीतिविषय। विद्वद्भिरेव अस्य कार्यस्य मूल्यम् ज्ञातु शक्यते।

अस्य राजनीतिकोशस्य **आदर्शखण्डः "कालिदासखण्डः"** अद्य अस्माभि प्रकाश्यते। वचनाना सङ्कलनम्, सङ्कलितवचनाना विभजनम्, तत्र उपप्रकरणरचनापूर्वक टिप्पण्यादिपरिष्करणम् पारिभाषिकशब्दादीनाम् अर्था च इत्यनेन अय खण्ड सर्वेषामपि आदरणीयो भवेत्, उपयोगाय च कल्पेत इति दृढ विश्वास। तथापि—

**'आपरितोषाद्विदुषाम् न साधु मन्ये प्रयोगविज्ञानम्।**
**बलवदपि शिक्षितानाम् आत्मन्यप्रत्ययं चेतः ॥'**

इति कविकुलगुरोः कालिदासस्यैव वचसा निवेदयति—

दिल्ली
११-११-५४ } गाडगीळकुलोत्पन्न विष्णुसूनुः नरहरिशर्मा

# कृतज्ञता

"क्लेशः फलेन हि पुनर्नवतां विधत्ते" – कालिदास

महान् न सन्तोष यद् अद्य "कालिदास-खण्डस्य" प्रकाशन नाम। सवत्सरद्वयात् प्राक् अस्माभि स्व स्व नियतोद्योग परिपाल्य केवल प्राचीन-भारतीय-राज्यशास्त्रे अभिरुचि इत्येव भारतीय-राजनीति-कोशस्य कार्यं प्रारब्धम्। तदारभ्य चाणक्यस्य अर्थशास्त्रम्, कामन्दकीयो नीतिसार, ऋग्वेदस्य च प्रथम मण्डलम्, कालिदासीय वाङमय च अद्यावधि परिशीलितम्। तत्र अद्य कालिदासखण्डस्य प्रकाशनम् इति प्रमोदतेतमा चेत। तत्र च सुरसारस्वतसेवासुसस्कारितस्वान्तानाम्, उदारचरितानाम्, सम्भावितगुणिगणानाम्, श्रीमताम् **राष्ट्रपति- डॉ राजेन्द्र-महोदयानाम्** आध्यक्ष्ये अय महोत्सव इति सविशेषोऽस्मानन्द। साधूक्त खलु— "**मधुरं हि पयः स्वभावतो ननु कीदृक् सितशर्करान्वितम्**" मधुरोष्णे गो दुग्धे सितशर्करासमिश्रणमिव अद्यतनोऽय समारम्भ। प्राचीन-भारतीय-राजनीतौ बद्धादराणाम्, त्रयस्त्रिंशत्कोटिसङ्ख्याकाना भारतीयाना हृदयमिव वर्तमानानाम्, **राष्ट्रपति**महोदयानाम् आशीर्वचनेन आस्माकीन सर्वोऽपि क्लेश "ब्रह्मणीव विवर्तानां क्वापि प्रविलयं गत" इति। अत नैकानि महत्वपूर्णानि कार्याणि परित्यज्य, स्वशरीरास्वास्थ्यम् अविगणय्य, **राष्ट्रपतिमहोदयैः स्वयम् समागत्य "कालिदास खण्डस्य" प्रकाशनं क्रियते इति अत्यन्तम् अवनतशिरसा कृतज्ञताभावं प्रथमं प्रकटीकरोमि।**

महामहोपाध्याया पोतदारमहोदया भारतीय-राजनीति-कोशमण्डलस्य अध्यक्षा। तै यद् अस्मिन् कर्मणि मार्गदर्शनम् कृतम्, यच्च प्रस्तावना विलिख्य अहमुपकृत, तदर्थं तेभ्य धन्यवादवितरणम् आवश्यकम्।

श्री बाबासाहेब गाडगीळ महोदयै विविधै प्रकारै गते वर्षद्वयात्मके काले सर्वात्मना परिपोषितमिद मण्डलम्। किं च पुरस्काररूपेण अत्र प्रारम्भे तै महत्वपूर्णं विलिख्य अहमत्यन्तम् उपकृत। अत नम्रभावपुरःसर तेभ्य धन्यवादार्पण क्रियते।

म म विद्यावाचस्पतिप्रवर, श्रीमन्त आबासाहेब मुजुमदारमहोदया, श्री के पा जोशीमहोदयाश्च विविध-साहाय्य-प्रदानेन नितरा धन्यवादान् अर्हन्ति।

तिलकविद्यापीठस्य कार्यकर्तृभि श्रीवासीकर-भागवत-पुरदरे-महोदयै नैकविध साहाय्यमस्मिन् कर्मणि प्रदत्तम्, अत तेभ्यो धन्यवादा।

मुद्रकमहोदयेभ्य धन्यवादवितरणं तु क्रमप्राप्तमेवेति शम्—

—वेङ्कटेशशास्त्री जोशी.

# अनुक्रमाणिका

## प्रथमम् प्रकरणम् ।

## राजा (१–५२)

## द्वितीयम् प्रकरणम् ।

## सचिवः (५३–६२)



## तृतीयम् प्रकरणम् ।

## सुहृद् (६३–७९)

## चतुर्थम् प्रकरणम्

## कोशः (८०—८३)



## पञ्चमम् प्रकरणम्।

## राष्ट्रम् (८४—८८)



## षष्ठम् प्रकरणम्

## दुर्गाः (८९—९२)

## सप्तमम् प्रकरणम्

## बलम् (९३–१०४)



---

# – भारतीय –
# राजनीति-कोषः
## कालिदास-खण्डः

प्राचीन-भारतीय-राजनीतिविषये विचारे क्रियमाणे ऋग्वेदमादितः विमर्शः कर्तव्यो भवति। शतपथादयो ब्राह्मणग्रन्थाः, नैकानि धर्मसूत्राणि, महाभारतम्, अर्थशास्त्रम्, मन्वादयः स्मृतयः, कामन्दकीयो नीतिसारः, पाली-प्राकृतादि-भाषासु च वर्तमानाः प्रथिताः बहवो ग्रन्थाः प्राधान्येन परामर्शनीयाः भवन्ति। सत्स्वपि प्रधानभूतेषु एषु ग्रन्थेषु, राजनीतिकौशलस्य 'आदर्श—स्वरूपाविष्करणाय' कविकुलगुरुः कालिदासः एव अस्माभिः इदम्प्रथमतया स्वीकृतः, इत्यत्र विदत्स्वपि महत् कुतूहलं भवेत्।

अत्रेदमस्माकमाकूतम्-संस्कृत-सारस्वतम् आसेव्यमानानां सर्वेषामपि विदुषां, परस्परविरुद्धमतानुयायिनामपि सताम्, '**कालिदासः**' सुपरिचितः परमादरणीयः च। किं च कालिदासस्य कविकुलगुरुत्वे जीवनस्य सर्वेष्वपि विषयेषु '**समस्पर्शित्वम्**' एव प्रधानं निदानम्। अतः कालिदासेन स्थाने स्थाने भारतीय-राजनीतिविषये अपि प्रस्थापिताः सिद्धान्ताः परमार्थतया प्रामाणिकाः एव, इत्यत्र नास्ति संशीतिलेशोऽपि। प्रसङ्गविशेषेषु, वर्णनस्य काव्यात्मकतया अतिशयोक्तिरपि संभाव्यते, कल्पनाविलासोऽपि च आविष्कृतो भवति। तथापि अर्थावबोधे मूलतत्त्व-बुभुत्सूनां पाठकानामेतत् सर्वम् उपकाराय एव कल्पते, न पुनः अर्थहानये। किं च चाणक्यस्य 'अर्थशास्त्रम्' वा भवतु, 'मन्वादयः स्मृतयो' वा वर्तन्ताम्, तत्र तत्र उपनिबद्धानां नीतितत्त्वानां नियमानां च आचार-व्यवहार-रूपेण प्रतिबिम्बं तु सर्वसम्मतेषु महाकाव्येषु नाट्यादिकलासु च सम्यक् आविष्कृतं भवति। अतोऽपि कारणात् अस्माभिः 'कालिदासः' एव प्राथम्येन स्वीकृतः।

इमं परिष्कृतं खण्डम्, आन्तम् परिशील्य, विद्वदपश्चिमोत्तमाः प्रियपाठकमहोदयाः इदमेव मतम् सम्भावयेयुः इति दृढं विश्वसिमः।

ग्रन्थेऽस्मिन् सङ्कलितानां वचनानां वर्गशः विभजनं '**सप्ताङ्ग**' प्रधानां भारतीयां राज्य-पद्धतिम् अनुसृत्य (१) राजा, (२) सचिवः, (३) सुहृद्, (४) कोशः, (५) राष्ट्रम्, (६) दुर्गः, (७) बलम्, इति सप्तसु प्रकरणेषु सङ्ग्रथितम्। कालिदासेनापि "उपपन्नं ननु शिवं **सप्तस्वङ्गेषु** यस्य मे" रघु. १-६०, इत्यादिषु राज्यस्य सप्ताङ्गत्वं स्पष्टमेव प्रतिपादितम्। तत्र **सप्ताङ्गेष्वपि** यथासम्भवं विविधान् विषयान् समालोच्य नैकानि उपप्रकरणानि अपि आरचितानि। उपप्रकरणानां रचनावबोधे, सङ्ग्रथितानां वचनानामर्थकरणे, समुदितस्य प्रकरणस्य च तात्पर्यज्ञाने राज्यशास्त्रीयदृष्टया साहाय्यं भवतु, इति टिप्पण्यादिभिः सुपरिष्कृतोऽयं खण्डः। प्रथमं प्रकरणशः वचनानि सङ्कलय्य अन्ते सङ्कलितानां सर्वेषामपि वचनानाम् अकाराद्यनुक्रमेण सूचिरपि प्रदत्ता। ततश्च राज्यशास्त्रीय-पारिभाषिकशब्दानां स्फुटमर्थप्रतिपत्तये द्वितीयं परिशिष्टमस्मिन् खण्डे संयोजितम्। तत्र अर्थप्रदानावसरे 'अर्थशास्त्रम्', 'कामन्दकः', 'Monier Willims' एते प्रमाणभूताः।

तत्र 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च' इत्यस्मिन् प्रथमोपस्थितिकत्वात्, प्राधान्याच्च स्वामी नाम राजा एव आद्यं स्थानम् अलङ्कर्तुं योग्यः, इति कृत्वा प्रथमतः उपस्थाप्यन्ते राजविषयकाणि वचनानि। तत्र उपस्थितो राजा—

# १ राजा

दैवी कल्पना[1]

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम् ।
नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी,
गुरुभिरभिनिविष्टं लोकपालानुभावैः ॥ –रघु० २–७५

सुरेन्द्रमात्राश्रितगर्भगौरवात् प्रयत्नमुक्तासनया गृहागतः ।
तयोपचाराञ्जलिखिन्नहस्तया ननन्द पारिप्लवनेत्रया नृपः ॥ –रघु० ३–११

---

१ दैवी कल्पना—नृपस्य स्वरूपविषये भारतीयवाङ्मये विविधा कल्पनाः उपवर्णिता समुपलभ्यन्ते । ( १ ) यथा नृप साक्षात् परमेश्वरस्य अवतारः, ( २ ) नृपे कश्चन अलौकिक अथवा दैव अंशः, ( ३ ) नृप विशिष्टशौर्यधैर्यादिगुणान्वित मानव एव, पर परम्परया विशिष्टकुलोत्पन्न अपरिवर्तनीयश्च अपेक्षित, ( ४ ) नृप विशिष्टगुणान्वित अपि सन् प्रकृतीनाम् अनुमत्या एव सिंहासनाधिकारे विराजमान, सति प्रसङ्गे प्रकृतीना विरोधात् सिंहासनात् प्रभ्रश्यमान लोक-प्रातिनिधिक, इत्येवरूपा भेदा केनापि ज्ञातु शक्यन्ते ।

वेदवाङ्मये एकस्मिन्नेव प्रसङ्गे नृपस्य दैव्या कल्पनाया आविष्कार, सोऽपि च अथर्ववेदे,—यो देवो मर्त्यां अधि ( २०–१२७–७ ) — ब्राह्मणकाले प्रादुर्भूतः सूत्रग्रन्थैः पुराणैः स्मृतिग्रन्थैश्च दृढता नीत, योऽयं नृपस्य दैवोंऽशः अवतारकल्पना-विलासश्च स एव कालिदासीयवाङ्मये सर्वत्र स्थाने स्थाने निरपवादम् उपनिबद्ध उपलभ्यते । तद्विषयकाणि वचनानि अत्र 'दैवी कल्पना, अवतारकल्पना' इति अनयो उपप्रकरणयो सङ्ग्रथितानि ।

राज्ञ्या सुदक्षिणाया गर्भे एव 'महानुभावानाम् अष्टदिक्पालानां सुराणां च अंश आसीत्' इति 'गुरुभि लोकपालानुभावैः अभिनिविष्ट गर्भम्,' 'सुरेन्द्रमात्राश्रितगर्भगौरवात्' इति प्रकृतश्लोकद्वयस्थवर्णनेन स्पष्ट प्रतीत भवति ।

तं राजवीथ्यामधिहस्ति यान्तमाधोरणालम्बितमग्र्यवेशम् ।
**षड्वर्षदेशीयमपि प्रभुत्वात्** प्रैक्षन्त पौराः पितृगौरवेण ॥ –रघु० १८-३९

**मणौ महानील इति** प्रभावादल्पप्रमाणेऽपि यथा न मिथ्या ।
शब्दो **महाराज इति** प्रतीतस्तथैव तस्मिन् युयुजेऽर्भकेऽपि ॥–रघु० १८-४२

**पञ्चमं लोकपाला**नामूचुः साधर्म्ययोगतः ।
**भूतानां महतां षष्ठमष्टमं कुलभूभृताम्** ॥ रघु० १७-७८

**दुरितं दर्शनेन घ्नंस्तत्त्वार्थेन** नुदंस्तमः ।
प्रजाः स्वतन्त्रयाञ्चक्रे **शश्वत्सूर्य इवोदितः**॥ –रघु० १७-७४

अवतार-कल्पना[२]

अमी हि वीर्यप्रभवं भवस्य **जयाय सेनान्यमुशन्ति देवाः** ।
स च त्वदेकेषुनिपातसाध्यो ब्रह्माङ्गभूर्ब्रह्मणि योजितात्मा ॥ –कु० ३-१५

---

'बालोऽपि नावमन्तव्य, मनुष्य इति भूमिप । महती देवता ह्येषा नृपरूपेण तिष्ठति । इति स्मृतिवचनं समानयन् कालिदास. ' मणौ महानीले इव अर्भकेऽपि महाराज इति शब्द ' ' षड्वर्षदेशीयमपि प्रभुत्वात् ' इत्येववर्णनेन प्रकृतकल्पनाम् दृढीकरोति ।

'सूर्यादिग्रहाणा, लोकपालानां पञ्चमहाभूताना कुलभूभृता च साधर्म्यवर्णने दैवी कल्पना विकसिता इति अत्र ( १७-७८, १७-७४. ) स्पष्ट भवति ।

२. अस्मिन् ' अवतारकल्पना ' इति उपप्रकरणे सर्वत्रैव नृप परमेश्वरस्य साक्षात् अवतारः वर्तते इति उपवर्णितम् । किञ्च अवतारार्थं योजनापूर्वक विविधा. प्रयत्ना अनुष्ठातव्या भवन्ति इत्यपि स्पष्ट प्रदर्शितम् । दाशरथेः रामस्य वर्णनसमये ' सोऽहं दाशरथिर्भूत्वा, ' ' सुराणा दशमुखशिरश्छेदकार्यं निर्वर्त्य विष्वक्सेन –विष्णुः स्वतनु-विष्णुस्वरूपम् अविशत् ' इति वर्णनेन यथा विष्णो साक्षात् अवतारकल्पना ' रघुवंशे ' स्पष्टं ज्ञाता भवति, तथैव ' कुमारसम्भवे ' भगवत शङ्करात् पार्वत्या योजनापूर्वक सेनान्य जनयितु महता प्रयत्नेन सुरै इन्द्रेण च परकार्यं सम्पादित तदपि विस्तरेण अत्र प्रकरणे आदित ज्ञातु शक्यते । पार्वत्यामेव भगवत शङ्करात् एव विष्णो. अवतार. महता प्रयत्नेन सम्पादित इत्यनेन अवतारभूमि: अपि कीदृक् अभिमता इति सम्यक् अभिव्यज्यते ।

तदिच्छामो विभो स्रष्टुं सेनान्यं तस्य शान्तये ।
कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः ॥ -कु० २-५१

अत आहर्तुमिच्छामि पार्वतीमात्मजन्मने ।
उत्पत्तये हविर्भोक्तुर्यजमान इवारणिम् ॥ -कु० ६-२८

तस्मै हिमाद्रेः प्रयतां तनूजां यतात्मने रोचयितुं यतस्व ।
योषित्सु तद्वीर्यनिषेकभूमिः सैव क्षमेत्यात्मभुवोपदिष्टम् ॥-कु० ३-१६

तामस्मदर्थे युष्माभिर्याचितव्यो हिमालयः ।
विक्रियायै न कल्पन्ते सम्बन्धाः सदनुष्ठिताः ॥ -कु० ६-२९

देवास्तदन्ते हरमूढभार्यं किरीटबद्धाञ्जलयो निपत्य ।
शापावसाने प्रतिपन्नमूर्तेर्ययाचिरे पञ्चशरस्य सेवाम् ॥ -कु० ७-९२

तस्यानुमेने भगवान् विमन्युर्व्यापारमात्मन्यपि सायकानाम् ।
कालप्रयुक्ता खलु कार्यविद्भिर्विज्ञापना भर्तृषु सिद्धिमेति ॥ -कु० ७-९३

सुराः समभ्यर्थयितार एते कार्यं त्रयाणामपि विष्टपानाम् ।
चापेन ते कर्म न चातिहिंस्रमहो बतासि स्पृहणीयवीर्यः ॥ -कु० ३-२०

सोऽहं तृष्णातुरैर्वृष्टिं विद्युत्वानिव चातकैः ।
अरिविप्रकृतैर्देवैः प्रसूतिं प्रतियाचितः ॥ -कु० ६-२७

सोऽहं दाशरथिर्भूत्वा रणभूमेर्बलिक्षमम् ।
करिष्यामि शरैस्तीक्ष्णैस्तच्छिरः कमलोच्चयम् ॥ -रघु० १०-४४

संपत्स्यते वः कामोऽयं कालः कश्चित् प्रतीक्ष्यताम् ।
न त्वस्य सिद्धौ यास्यामि सर्गव्यापारमात्मना ॥ -कु० २-५४

निर्वर्त्यैवं दशमुखशिरश्छेदकार्यं सुराणाम्
विष्वक्सेनः स्वतनुमविशत् सर्वलोकप्रतिष्ठाम् ।
लङ्कानाथं पवनतनयं चोभयं स्थापयित्वा
कीर्तिस्तम्भद्वयमिव गिरौ दक्षिणे चोत्तरे च ॥ -रघु० १५-१०३

राजप्रभावः[३]

अजयदेकरथेन स मेदिनीमुदधिनेमिमधिज्यशरासनः।
जयमघोषयदस्य तु केवलं गजवती जवतीव्रहया चमूः॥ –रघु० ९–१०

अहन्यहन्यात्मन एव तावत् ज्ञातुं प्रमादस्खलितं न शक्यम्।
प्रजासु कः केन पथा प्रयातीत्यशेषतो वेदितुमस्ति शक्तिः॥ शा० ६–२६

अहो दीप्तिमतोऽपि विश्वसनीयतास्य वपुषः,
अथवा उपपन्नमेतदृषिभ्यो नातिभिन्ने राजनि। कुतः
अध्याक्रान्ता वसतिरमुनाऽप्याश्रमे सर्वभोग्ये,
रक्षायोगादयमपि तपः प्रत्यहं संचिनोति।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः॥ –शा० २–१४

किमत्र चित्रं यदि कामसूर्भूर्वृत्ते स्थितस्याधिपतेः प्रजानाम्।
अचिन्तनीयस्तु तव प्रभावो मनीषितं द्यौरपि येन दुग्धा॥ रघु० ५–३३

को नु खल्वेषश्चतुरगम्भीराकृतिश्चतुरं प्रियमालपन् प्रभाववानिव लक्ष्यते।
–शा. १, पृ. ३८

तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव॥ –रघु० १–२०

अहो महानुभावः पार्थिवो दुष्यन्तः। प्रविष्टमात्र एवाश्रमं तत्रभवति राजनि
निरुपद्रवाणि नः कर्माणि प्रवृत्तानि भवन्ति।
का कथा बाणसन्धाने ज्याशब्देनैव दूरतः।
हुंकारेणेव धनुषः स हि विघ्नानपोहति॥ –शा० ३–१

३. 'राजप्रभावः' इत्यस्मिन् उपप्रकरणे राज प्रभाव नाम दण्डज सामर्थ्यं सामान्यत निरूपितम्। तथा चोक्तं 'स प्रभाव प्रतापश्च यत्तेजो राजदण्डजम्' इति। प्रथमे श्लोके 'अधिज्यशरासन रा. नाम दशरथ एकरथेन मेदिनीम् अजयत्'

भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम् ।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः ॥ रघु० १-१६

ते रेखाध्वजकुलिशातपत्रचिह्नम्, सम्राजश्चरणयुगं प्रसादलभ्यम् ।
प्रस्थानप्रणतिभिरङ्गुलीषु चक्रुः मौलिस्रक्च्युतमकरन्दरेणुगौरम् ॥ -रघु० ४-८८

तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभियास्यमानात् ।
दिदेश कौत्साय समस्तमेव पादं सुमेरोरिव वज्रभिन्नम् ॥ -रघु० ५-३०

दधतो मङ्गलक्षौमे वसानस्य च वल्कले ।
ददृशुर्विस्मितास्तस्य मुखरागं समं जनाः ॥ -रघु० १२-८

न किलानुययुस्तस्य राजानो रक्षितुर्यशः ।
व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता ॥ -रघु० १-२०

पुत्रस्य ते रणशिरस्ययमग्रयायी
दुष्यन्त इत्यभिहितो भुवनस्य भर्ता ।
चापेन यस्य विनिवर्तितकर्म जातम्
तत्कोटिमत्कुलिशमाभरणं मघोनः ॥ शा० ७-२६

प्रसन्नमुखरागं तं स्मितपूर्वाभिभाषिणम् ।
मूर्तिमन्तममन्यन्त विश्वासमनुजीविनः ॥ रघु० १७-३१

यस्मिन् महीं शासति वाणिनीनां निद्रां विहारार्धपथे गतानाम् ।
वातोऽपि नास्रंसयदंशुकानि को लम्बयेदाहरणाय हस्तम् ॥
-रघु० ६-७५

---

इति उपवर्णितम्। शकुन्तलायाम् अपि राज्ञः दुष्यन्तस्य प्रभाववर्णनावसरे 'दीप्ति-मतोऽपि [illegible]' '[illegible]' '[illegible]' इत्यादि वर्णनेन तस्य प्रभाववर्णनं दृश्यते। 'चिरम् [illegible]' इत्यस्मिन् श्लोके [illegible] द्वितीये अपि '[illegible]' इत्यनेन, तथा च तत्र द्वितीये [illegible]

रम्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य ।
ज्ञास्यसि कियद्भुजो मे रक्षति मौर्वीकिणाङ्क इति ॥ –शा० १-१२

वयोरूपविभूतीनामेकैकं मदकारणम् ।
तानि तस्मिन् समस्तानि न तस्योत्सिषिचे मनः ॥ –रघु० १७-४३

व्रताय तेनानुचरेण धेनोर्न्यषेधि शेषोऽप्यनुयायिवर्गः ।
न चान्यतस्तस्य शरीररक्षा स्ववीर्यगुप्ता हि मनोः प्रसूतिः ॥ रघु० २-४

शिक्षा[४]

त्वचं स मेध्यां परिधाय रौरवीमशिक्षितास्त्रं पितुरेव मन्त्रवित् ।
न केवलं तद्गुरुरेकपार्थिवः क्षितावभूदेकधनुर्धरोऽपि सः ॥ –रघु० ३-३१

स पूर्वजन्मान्तरदृष्टपाराः स्मरन्निवाक्लेशकरो गुरूणाम् ।
तिस्रस्त्रिवर्गाधिगमस्य मूलं जग्राह विद्याः प्रकृतीश्च पित्र्याः ॥ –रघु० १८-५०

आजन्मनः शाठ्यमशिक्षितो यः तस्याप्रमाणं वचनं जनस्य ।
परातिसंधानमधीयते यैः विद्येति ते सन्तु किलाप्तवाचः ॥–शा० ५-२५

---

'प्रारम्भाः फलानुमेयाः' इत्यनेन तत्तेषां राज्ञां सम्यक् प्रभावः आविष्कृतः भवति। 'यस्मिन् महीं शासति' इत्यस्मिन् श्लोके 'दिलीपस्य राज्ये अभिसारिकाणामपि वस्त्राञ्चलस्पर्शने वातोऽपि समर्थो न भवति' इति वर्णनेन तस्य प्रभावः स्पष्टः भवति। 'दधतो मङ्गलक्षौमे' 'प्रसन्नमुखराग' 'वयोरूपविभूतीनाम्' इति एतेषु श्लोकेषु यद्यपि दण्डजः प्रभावः नास्ति, किन्तु आत्मप्रभावः सम्यक् प्रतीतः भवति, तेनापि च दण्डप्रभावसदृशमेव कार्यं भवति। अतः तेषाम् अपि अस्मिन् प्रकरणे संग्रहः उचितः।

४. क्षत्रियाणां विशेषतः राज्ञाम् अध्ययनादि विधिः कीदृक् आसीत् इत्यादि किञ्चिदिव कालिदासीयवाङ्मयात् ज्ञातुं शक्यते। प्रथमे श्लोके 'पितुः दिलीपात् एव अस्त्रविद्याज्ञानं रघुणा सम्पादितम्' इति वर्णितम्। द्वितीये श्लोके तु सुदर्शनः त्रिवर्गस्य नाम धर्मार्थकामानां मूलभूताः तिस्रः विद्याः त्रयी-वार्ता-दण्डनीतिरूपाः

कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने ।
चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्यार्थदर्शिना ॥ -रघु० ४-१३

तथेत्युपस्पृश्य पयः पवित्रं सोमोद्भवायाः सरितो नृसोमः ।
उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं जग्राह तस्मान्निगृहीतशापात् ॥
रघु० ५-५९

नैर्ऋतघ्नमथ मन्त्रवन्मुनेः प्रापदस्त्रमवदानतोषितात् ।
ज्योतिरिन्धननिपाति भास्करात् सूर्यकान्त इव ताडकान्तकः ॥ -रघु० ११-२१

सेनापरिच्छदस्तस्य द्वयमेवार्थसाधनम् ।
शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्वी धनुषि चातता ॥ -रघु० १-१९

तमादौ कुलविद्यानामर्थमर्थविदां वरः ।
पश्चात्पार्थिवकन्यानां पाणिमग्राहयत्पिता ।

पृथ्वी-पति[1]

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे ।
समुद्रवसना चोर्वी सखी च युवयोरियम् ॥ शाकु० ३-१७

---

यथाह-न्यायतोऽपचारः। तथा च कौटिल्य आह 'धर्माधर्मौ त्रय्याम्, अर्थानर्थौ वार्तायां नयानयौ दण्डनीत्याम्' इति। आन्वीक्षिकी त्रय्याम् एव अन्तर्भवति। अयम् एव अभिप्राय 'तमादौ कुलविद्यानाम्' इत्यस्मिन् श्लोके व्यक्तो भवति। अभिज्ञानशाकुन्तले पञ्चमेऽङ्के शकुन्तलाया वचनम् अवमानीकुर्वन् दुष्यन्तस्य [illegible] शार्ङ्गरवेण तस्मै दुष्यन्ताय कथितं, यद् यथा शकुन्तलया आत्मन शाठ्यं न ज्ञातं, तस्याः वचनम् अप्रमाणीभूतम् इति [illegible] नाम [illegible] [illegible] [illegible] इति [illegible] [illegible]। [illegible] [illegible] [illegible] न भवति किन्तु [illegible] इति 'शास्त्रेषु अकुण्ठिता बुद्धिः,' 'चक्षुष्मत्ता तु शास्त्रेण' इत्यादिभिरेव स्पष्टं भवति। [illegible] [illegible] [illegible] शास्त्रं [illegible] च [illegible] इति 'नैर्ऋतघ्नम्' 'तथेत्युपस्पृश्य' इति [illegible] श्लोकद्वये [illegible] दर्शितम्।

सदयं बुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति ॥
अचिरोपनतां स मेदिनीं नवपाणिग्रहणां वधूमिव ॥ -रघु० ८-७

आमुक्ताभरणः स्रग्वी हंसचिह्नदुकूलवान् ।
आसीदतिशयप्रेक्ष्यः स राज्यश्रीवधूवरः ॥ -रघु० १७-२५

उरस्यपर्याप्तनिवेशभागा प्रौढी भविष्यन्तमुदीक्षमाणा ॥
सञ्जातलज्जेव तमातपत्रच्छायाच्छलेनोपजुगूह लक्ष्मीः ॥ रघु० १८-४७

क्षितिरिन्दुमती च भामिनी पतिमासाद्य तमग्र्यपौरुषम् ।
प्रथमा बहुरत्नसूरभूदपरा वीरमजीजनत्सुतम् ॥ -रघु० ८-२८

खनिभिः सुषुवे रत्नं क्षेत्रैः सस्यं वनैर्गजान् ।
दिदेश वेतनं तस्मै रक्षासदृशमेव भूः ॥ -रघु० १७-६६

तदलं तदपायचिन्तया विपदुत्पत्तिमतामुपस्थिता ।
वसुधेयमवेक्ष्यतां त्वया वसुमत्या हि नृपाः कलत्रिणः ॥ -रघु० ८-८३

तामेकभार्यां परिवादभीरोः साध्वीमपि त्यक्तवतो नृपस्य ॥
वक्षस्यसंघट्टसुखं वसन्ती रेजे सपत्नीरहितेव लक्ष्मीः ॥ -रघु० १४-८६

प्रजानुरागकल्पना[६]

यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥ -रघु० ४-१२

---

५. 'पृथ्वीपतिः' इत्यस्मिन् प्रकरणे राज्ञः पृथिव्याश्च सर्वत्र प्रसिद्धः पति-पत्नीरूपः सम्बन्धः अत्रापि वैपुल्येन उपवर्णितोऽस्ति। पृथ्वीवत् राजलक्ष्म्याः अपि पत्नीत्वेन निरूपणं स्थाने स्थाने कालिदासेन यत् कृतं तत् अपि साधर्म्यात् कल्पनासाम्यात् च अत्र सङ्गृहीतम् । सर्वेऽपि सरलाः श्लोकाः सुस्पष्टाः वर्तन्ते ।

**अहमेव मतो महीपतेरिति** सर्वः प्रकृतिष्वचिन्तयत् ।
उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित् ॥

उदक् प्रतस्थे स्थिरधीः सानुजोऽग्निपुरःसरः ।
अन्वितः **पतिवात्सल्यात्** गृहवर्जमयोध्यया ॥ –रघु० १५-९८

जगृहुस्तस्य चित्तज्ञाः पदवीं हरिराक्षसाः ।
कदम्बमुकुलस्थूलैरभिवृष्टां **प्रजाश्रुभिः** ॥ –रघु० १५-९९

राजा— ( आत्मगतम् ) —
पौरा **अस्मदन्वेषिणस्त**पोवनमुपरुन्धन्ति । –शाकु०१– पृ. ५२

पुरुहूतध्वजस्येव तस्योन्नयनपङ्क्तयः
नवाभ्युत्थानदर्शिन्यो **ननन्दुः सप्रजाः प्रजाः** –रघु० ४–३

इक्षुच्छायनिषादिन्यस्तस्य गोप्तुर्गुणोदयम् ।
आकुमारकथोद्घातं **शालिगोप्यो जगुर्यशः** ॥ –रघु० ४–२०

**अवाकिरन्वयोवृद्धास्तं लाजैः** पौरयोषितः ।
पृषतैर्मन्दरोद्धूतैः क्षीरोर्मय इवाच्युतम् ॥ –रघु० ८–२७

पुरन्दरश्रीः पुरमुत्पताकं प्रविश्य **पौरैरभिनन्द्यमानः** ।
भुजे भुजङ्गेन्द्रसमानसारे भूयः स भूमेर्धुरमाससञ्ज ॥ –रघु० २–७४

---

६. '**प्रजानुरागकल्पना**' इत्यस्मिन् प्रकरणे नृपविषयिणी प्रीतिः प्रजासु कीदृक् आसीत् एतत्सन्दर्शकानि वचनानि अत्र सङ्गृहीतानि । 'राजा प्रकृतिरञ्जनात् अन्वर्थोऽभूत्' 'अहमेव मतो महीपते' इति सर्वप्रकृतीनाम् अभिमान प्रजानुरागं सम्यक् आविष्करोति । 'रघौ' पञ्चदशे सर्गे रामस्य प्रयाणावसरे 'पतिवात्सल्यात् अयोध्या सर्वाऽपि तत्र साक्षात् आगता, केवल गृहाणि न आगतानि अचेतनत्वात्, तथैव 'शाकुन्तले' "अस्मदन्वेषिण पौरा. तपोवनमुपरुन्धन्ति" इति दुष्यन्तस्य वचनेन राज्ञि प्रजानाम् एकनिष्ठा प्रीतिः अभिव्यज्यते । 'शालिगोप्य रघो यश जगु' 'वृद्धा. पौरयोषितः लाजै. रघुम् अवाकिरन्' इत्यादिवर्णनेन नृपविषयिणी

इत्थं जनितरागासु प्रकृतिष्वनुवासरम् ।
अक्षोभ्यः स नवोऽप्यासीद् दृढमूल इव द्रुम ॥ —रघु० १७-४४

लोकपिता[७]

प्रजाना विनयाधानात् रक्षणात् भरणादपि ।
स पिता पितरस्तासा केवल जन्महेतव ॥ —रघु० १-२४

तेनार्थवाँल्लोभपराङ्मुखेन तेन घ्नता विघ्नभय क्रियावान् ॥
तेनास लोकः पितृमान् विनेत्रा तेनैव शोकापनुदेन पुत्री ।
—रघु० १४-२३

भूतानुकम्पा तव चेदियं गौरेका भवेत्स्वस्तिमती त्वदन्ते ।
जीवन् पुन शश्वदुपप्लवेभ्य प्रजाः प्रजानाथ पितेव पासि ॥
—रघु० २-४८

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा निषेवतेऽशान्तमना विविक्तम् ।
यूथानि सञ्चार्य रविप्रतप्तः शीत दिवास्थानमिव द्विपेन्द्रः ॥
—शाकुं० ५ अ, पृ १५५

येन येन वियुज्यन्ते प्रजा स्निग्धेन बन्धुना ।
स स पापात् ऋते तासां दुष्यन्त इति घुष्यताम् ॥ —शाकुं ५-२३

---

भक्ति प्रतीयते । अत एव ते ते नृपा 'जनितरागासु प्रकृतिषु दृढमूला द्रुमा इव आसन्' इति महाकवि कालिदास सम्यग् वर्णयति ।

७ 'लोकपिता' इत्यस्मिन् प्रकरणे राज्ञः कर्तव्यं केवल रक्षण न, किन्तु विनयाधानादिकमपि आवश्यक कर्तव्यम् इत्यत्र प्रदर्शनानि 'विनयाधानात् राजा स एव पिता' 'शोकापनुदेन पुत्री, विनेत्रा पितृमान्' 'उपप्लवेभ्य नाम दुःखेभ्य विघ्नेभ्यश्च प्रजा पासि' 'प्रजा स्वकीयापत्यानि इव (स्वा प्रजा) तन्त्रयित्वा' इत्यादीनि वचनानि अत्र सङ्गृहीतानि ।

लोकापवादमहत्त्वम्[८]

पौरेषु सोऽहं बहुलीभवन्तमपां तरङ्गेष्विव तैलबिन्दुम् ।
सोढुं न तत्पूर्वमवर्णमीशे आलानिकं स्थाणुमिव द्विपेन्द्रः ॥

–रघु० १४–३८

अवैमि चैनामनघेति किंतु लोकापवादो बलवान् मतो मे ।
छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः ॥

–रघु० १४–४०

वाच्यस्त्वया मद्वचनात्स राजा वह्नौ विशुद्धामपि यत् समक्षम् ।
मां लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य ॥

–रघु० १४–६१

जाने विसृष्टां प्रणिधानतस्त्वां मिथ्यापवादक्षुभितेन भर्त्रा ।
तन्मा व्यथिष्ठा विषयान्तरस्थं प्राप्ताऽसि वैदेहि पितुर्निकेतम् ॥

–रघु० १४–७२

बभूव रामः सहसा सबाष्पस्तुषारवर्षीव सहस्यचन्द्रः ।
कौलीनभीतेन गृहान्निरस्ता न तेन वैदेहसुता मनस्तः ॥

–रघु० १४–८४

---

८. 'लोकापवादमहत्त्वम्' इत्यस्मिन् प्रकरणे लोकेच्छायाः सर्वापेक्षया बलीयस्त्वम् एव निरूपितं दृश्यते । वस्तुतत्त्वम् अजानताम् अपि लोकानाम् इच्छार्थं नृपाः स्वकीयम् अभिमतम् इष्टं सत्यम् च परिहाय मिथ्यापवादमपि लोकेच्छारूपत्वात् प्रमाणयन्ति इति एतत् रामचन्द्रः 'तत्पूर्वम् अवर्णं सोढुं न ईशे' 'एनां सीताम् अनघां जानामि परन्तु लोकापवादः मे बलवान् मतः' इत्यादिवचनैः लोकापवादमहत्त्वं दृढीकरोति । सीतया अपि 'मां समक्षं वह्नौ विशुद्धां दृष्ट्वा अपि केवलं लोकवाद-श्रवणात् अहासीः' इतिवचनेन लोकापवादबलीयस्त्वं सम्यक् प्रदर्शितम् । वाल्मीकिना अपि 'मिथ्यापवादक्षुभितेन राज्ञा त्वां विसृष्टाम् अहं जाने' इति उक्तवता राज्ञां चरितविषये लोकापवादस्य कियत् महत्त्वम् आसीत् इत्यपि सम्यक् आविष्कृतम् । अन्तिमे श्लोके च 'रामेण कौलीनभीतेन सता सीता गृहान्निरस्ता न तु मनसः' इति अपि सम्यक् विवेचितम् ।

## रक्षण-कल्पना, रक्षण-मर्यादा[१]

पृथिव्याः यः शरणं स तव समीपे वर्तते । शाकु० ३, पृ १०६

नियमयसि कुमार्गप्रस्थितानात्तदण्डः ।
प्रशमयसि विवादं कल्पसे रक्षणाय ॥
अतनुपु विभवेषु ज्ञातयः सन्तु नाम ।
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥ शाकु० श्लो ८

अनुकारिणि पूर्वेषा युक्तरूपमिदं त्वयि ।
आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः ॥ –शाकु० २, श्लो १६, पृ. ८०

शब्दादीन् विषयान् भोक्तुं दुश्चर चरितुं तप. ।
पर्याप्तोऽसि प्रजाः पातुमौदासीन्येन वर्तितुम् ॥ -रघु० १०-२५

कौशिकेन स किल क्षितीश्वरो राममध्वरविघातशान्तये ।
काकपक्षधरमेत्य याचितस्तेजसां हि न वयः समीक्ष्यते ॥-रघु० ११-१

निशाचरोप्लुतभर्तृकाणा तपस्विनीनां भवतः प्रसादात् ।
भूत्वा शरण्या शरणार्थमन्यं कथ प्रपत्स्ये त्वयि दीप्यमाने ॥ –रघु० १४-६४

---

१ 'रक्षणकल्पना रक्षणमर्यादा च' इत्यस्मिन् उपप्रकरणे राज्ञा प्रजारक्षण-विषये किं कर्तव्यम् आसीत् तथा रक्षणस्य का वा मर्यादा आसीत् इत्येतद्विषयकाणि वचनानि अत्र सङ्गृह्यन्ते । 'शाकुन्तले' तृतीयेऽङ्के शकुन्तला प्रति सखीवचनम् 'अस्या सर्वस्या अपि पृथिव्या य आश्रयस्थान रक्षकत्वेन स दुष्यन्त तव समीपे वर्तते'। तथैव 'शाकुन्तले' पञ्चमेऽङ्के वैतालिक राजान दुष्यन्त समभिनन्दयति यत् 'त्वं यथा रक्षणाय कल्पसे, यथा च कुमार्गप्रस्थितान् नियमयसि तथैव परस्पर-विवादम् अपि प्रशमयसि, अत. प्रजाना बन्धुकृत्य- रक्षणम्, विवादप्रशमनम्, सन्मार्ग-प्रवर्तनं च – त्वयि एव राज्ञि परिसमाप्तम्' इत्यनेन प्रजानां रक्षणविषये का वा कल्पना मर्यादा च इति अनुमातु शक्यते । दाशरथौ रामे पृथिवीं शासति सति कदा-चित् कस्यचन विप्रस्य अप्राप्तयौवन शिशु मृत । त मृत शिशुम् अङ्के आरोप्य सः विप्र राजद्वारि चक्रन्द, यत् 'हे वसुधे- वसुधातलनिवासिन. जना 'भवताम् दशरथात् च्युतानां रामहस्तागतानां च अत्यन्त शोचनीया अवस्था । यत अवलोक्यताम् अयं मे

अथ जानपदो विप्रः शिशुमप्राप्तयौवनम् ।
अवतार्याङ्कशय्यास्थं द्वारि चक्रन्द भूपतेः ॥
शोचनीयासि वसुधे या त्वं दशरथाच्च्युता ।
रामहस्तमनुप्राप्य कष्टात्कष्टतरं गता ॥
श्रुत्वा तस्य शुचो हेतुं गोप्ता जिह्राय राघवः ।
न ह्यकालभवो मृत्युरिक्ष्वाकुपदमस्पृशत् ॥
स मुहूर्तं क्षमस्वेति द्विजमाश्वास्य दुःखितम् ॥
यानं सस्मार कौबेरं वैवस्वतजिगीषया ॥ —रघु० १५. ४२–४५

स त्वं निवर्तस्व विहाय लज्जां गुरोर्भवान् दर्शितशिष्यभक्तिः ।
शस्त्रेण रक्ष्यं यदशक्यरक्षं न तद्यशः शस्त्रभृतां क्षिणोति
इति प्रगल्भं पुरुषाधिराजो मृगाधिराजस्य वचो निशम्य ।
प्रत्याहतास्त्रो गिरिशप्रभावादात्मन्यवज्ञां शिथिलीचकार ॥
—रघु० २. ४०–४१

वापीष्विव स्रवन्तीषु वनेषूपवनेष्विव ।
सार्थाः स्वैरं स्वकीयेषु चेरुर्वेश्मस्विवाद्रिषु ॥ —रघु० १७–६४

राजरक्षितव्यानि तपोवनानि नाम । —शाकु १ २०

वैखानसः— रम्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य ।
ज्ञास्यसि कियद्भुजो मे रक्षति मौर्वीकिणाङ्क इति ॥ —शाकु० १–१२

---

अप्राप्तयौवन शिशु मृत.' । रामचन्द्रोऽपि तस्य शोकस्य कारण ज्ञात्वा स्वय जिह्राय न तु तस्मै द्विजाय चुक्रोध । यत रामचन्द्रस्यापि दृढा श्रद्धा, यत् अकालभवो मृत्यु इक्ष्वाकुराज्यान्तर्गत प्रदेश स्पृशति चेत तद्दूरीकरण नृपेणैव कर्तव्यम् । एतदेव 'अथ जानपदो विप्र' इत्यादिभि पञ्चभिः श्लोकै 'रघुवंशे' पञ्चदशे सर्गे सम्यक् विवेचितम् । 'रघुवंशे' द्वितीये सर्गे "यत् रक्ष्य शस्त्रेण रक्षयितुम् अशक्य तत् शस्त्रभृता राज्ञा यश न नाशयति" शङ्करसामर्थ्यात् प्रत्याहतास्त्र आत्मनि अवज्ञां शिथिलीचकार' इत्यादिवर्णनेन राज्ञा रक्षणमर्यादायाः अपराध्नोऽपि ज्ञातो भवति। 'सार्थाः

किं तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितम्
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ॥
आहोस्वित् प्रसवो ममापचरितैः विष्टम्भितो वीरुधाम्
इत्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥ -शाकु० ५-९

प्रियंवदा— **आपन्नस्य विषयनिवासिनः जनस्यार्तिहरेण**
राज्ञा भवितव्यमित्येष युष्माकं धर्मः ।

राजा— **नास्मात्** परम् -शाकु० ३ १०३

उभौ— तत्रभवतः कण्वस्य महर्षेरसान्निध्यात् रक्षांसि **नः इष्टिविघ्न-
मुत्पादयन्ति** । तत्कतिपयरात्रं सारथिद्वितीयेन भवता
सनाथीक्रियतामाश्रम इति

राजा— **अनुगृहीतोऽस्मि** । -शाकु २, ७९

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्रीम्
एकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते सुरयुवतयो बद्धवैरा हि दैत्यैः
अस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥ -शा० २, १५

सोऽहमाजन्मशुद्धानाम् आफलोदयकर्मणाम् ।
**आसमुद्रक्षितीशानाम् आनाकरथवर्त्मनाम्** ॥ -रघु० १-५

---

वणिजः अद्रिषु स्वकीयेषु वेश्मसु इव अटन्ति स्म ' ' तपोवनानि अपि राजरक्षितव्यानि एव ' इत्यादिवर्णनेन राज्ञा सर्वत्रैव प्रदेशे रक्षणकल्पनाया निरूपणं वर्तते । 'आपन्नाभयसत्रेषु' इत्येतत्सदृशे सङ्गृहीते वचने सामान्यतः रक्षणकल्पना एव आविष्कृता भवति । 'उदधिश्यामसीमाम् ' 'आसमुद्रक्षितीशानाम् आनाकरथवर्त्मनां ' पारलौकिकसागराम् ' इत्यादिभिः वर्णनैः पृथिव्याः रक्षणमर्यादा तृतीयेनापि अर्पेन ज्ञाता भवति । 'शाकुन्तले' अपि तृतीयेऽङ्के प्रियंवदा राजानं कथयति ' जनस्य अर्तिहरेण राज्ञा भवितव्यम् इति युष्माकं धर्मः ' तदा दुष्यन्तः अपि ' नास्मात् परम् ' इति शटिति अङ्गीकरोति । तथैव ' इष्टिविघ्नम् उत्पादयता रक्षसा निवा-

स वेलावप्रवलयां परिखीकृतसागराम् ।
अनन्यशासनामुर्वीं शशासैकपुरीमिव ॥ –रघु० १;३०

## चातुर्वर्ण्यपालनम्[10]

इत्याप्तवचनाद्रामः विनेष्यन् वर्णविक्रियाम् ।
दिशः पपात पत्रेण वेगनिष्कम्पकेतुना ॥ –रघु० १५-४८

महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद् वर्णानामपथमपकृष्टोऽपि भजते ।
तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥ –शाकुं० ५-१०

तपो रक्षन् स विघ्नेभ्यस्तस्करेभ्यश्च सम्पदः ।
यथास्वमाश्रमैश्चक्रे वर्णैरपि षडंशभाक् ॥ –रघु० १७-६५

तपस्यनधिकारित्वात् प्रजानां तमघावहम् ।
शीर्षच्छेद्यं परिच्छिद्य नियन्ता शस्त्रमाददे ॥ रघु० १५-५१

कृतदण्डः स्वयं राज्ञा लेभे शूद्रः सतां गतिम् ।
तपसा दुश्चरेणापि न स्वमार्गविलङ्घिना ॥ –रघु० १५-५३

---

रणाय भक्तिपदरासम् अत्र भवता स्थातव्यम्' इति ऋषीणाम् इच्छाम् अपि राजा दुष्यन्तः सम्मानयति 'अनुगृहीतोऽस्मि' इति वचनेन ।

१० 'चातुर्वर्ण्यपरिपालनम्' इत्यस्मिन् उपप्रकरणे सर्वेषाम् अपि वर्णानां विहितधर्मानुसारं राजा रक्षणं कर्तव्यम् इत्यादिप्रदर्शकानि वचनानि अत्र संगृहीतानि । 'वर्णविक्रियां विनेष्यन् रामः' 'तपसि अनधिकारित्वात् शीर्षच्छेद्यं शूद्रं नियन्तुं शस्त्रम् आददानः रामः' 'राज्ञा रामेण कृतदण्डः शूद्रः सतां गतिं लेभे' इत्यादिषु वचनेषु वर्णानां विहितधर्मानुसारेण एव प्रजानां राज्ञा च अभ्युदय इति स्पष्टं प्रतिपादितम् । तदेव च 'वर्णानाम् अपकृष्टः अपि अपथं न भजते' 'वर्णैः अपि षडंशभाक् (अभूत्) यथास्वम् आश्रमैः चक्रे' इत्यादिवचनैः समर्थितम् । कालिदासोदयकाले सर्वेऽपि चातुर्वर्ण्यं सन्तुष्टा एव इति स्पष्टम् अभिव्यक्तं भवति ।

क्षात्रधर्मः[11]

**नृपस्य वर्णाश्रमपालनं यत् स एव धर्मो** मनुना प्रणीतः ।
निर्वासिताप्येवमतस्त्वयाऽहं तपस्विसामान्यमवेक्षणीया ॥ –रघु० १४–६७

निगृह्य शोकं स्वयमेव धीमान्, **वर्णाश्रमावेक्षणजागरूकः** ।
स भ्रातृसाधारणभोगमृद्धम्, **राज्यं रजोरिक्तमनाः शशास** ॥
–रघु० १४–८५

प्रतिशुश्राव काकुत्स्थः तेभ्यो विघ्नप्रतिक्रियाम् ।
**धर्मसंरक्षणार्थैव प्रवृत्तिर्भुवि** शार्ङ्गिणः ॥ –रघु० १५–४

तथापि **शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरमस्य** तस्थुषः ।
तुतोष वीर्यातिशयेन वृत्रहा पदं हि सर्वत्र गुणैर्निधीयते ॥ –रघु० ३–६२

**क्षतात्किल त्रायत** इत्युदग्रः
**क्षत्रस्य शब्दो** भुवनेषु रूढः ।
राज्येन किं तद्विपरीतवृत्तेः
प्राणैरुपक्रोशमलीमसैर्वा ॥ –रघु० २–५३

---

११ '**क्षात्रधर्म**' इत्यस्मिन् प्रकरणे क्षत्रियाणा विशिष्य च नृपाणा के वा धर्मा, किं च कार्यम् अकार्यम् इत्येतत्प्रदर्शकानि वचनानि अत्र सङ्गृहीतानि। प्रायः अस्मिन् विषये स्थाने स्थाने मनुवचनम् एव प्रमाणयन् कालिदास 'नृपस्य वर्णाश्रम-पालन यत् स एव धर्म' इति मनुम् अनुवदति। 'शस्त्रव्यवहारनिष्ठुरे उदग्र क्षत्रस्य शब्दः' इत्यादिभि वचनै क्षात्रधर्मस्य प्रखरता सम्यक् अविष्कृता भवति। 'आर्तानां भय दूरीवर्तुं गृहीतधनु दुष्यन्त' 'सता रक्षिता अविनीतानां शासिता' इत्यादिभि विशेषणै क्षात्रधर्मस्य कर्तव्य निरूपित भवति। प्रजारक्षणम् इति एक तपस एव प्रकार, न तु केवल भोग इत्यपि 'रक्षायोगात् अयम् अपि दुष्यन्त प्रत्यह तप सञ्चिनोति' 'रक्षाधिकेषु भवनेषु अपि क्षितिरक्षार्थम् एव ये निवासम् इच्छन्ति न तु उपभोगाय' राज्ञा वृत्त सुखोपरोधि सुखप्रतिबन्धकम्, अत एव स पारियात्रः राजा स्वपुत्र युवराज कृत्वा एव सुखानि अभुङ्क्त (१८.१८ रघु.) इत्यादिना सम्यक् प्रतिपादितम्। वीर्यातिशयशालिनाम् अपि राज्ञा प्रवृत्ति परिणामत सत्व-

अथवा उपपन्नमेतदपिम्यो नातिभिन्ने राजनि । कुतः —

अध्याक्रान्ता वसतिरमुनाऽप्याश्रमे सर्वभोग्ये ।
रक्षायोगादयमपि तपः प्रत्यहं संचिनोति ॥
अस्यापि द्यां स्पृशति वशिनः चारणद्वन्द्वगीतः ।
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥ —शाकु० २-१४

एष त्वामभिनवकण्ठशोणितार्थी,
शार्दूलः पशुमिव हन्मि चेष्टमानम् ।
आर्तानां भयमपनेतुमात्तधन्वा,
दुष्यन्तस्तव शरणं भवत्विदानीम् ॥ —शाकु० ६-२७

ऋषयः— कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥

राजा— अर्थवान् खलु मे राजशब्दः । —शाकु० ५-१४

भवनेषु रसाधिकेषु पूर्वम्, क्षितिरक्षार्थमुशन्ति ये निवासम् ।
नियतैकपतिव्रतानि पश्चात्, तरुमूलानि गृहीभवन्ति तेषाम् ॥
—शाकु० ७-२०

विदूषक— भवानेव अविनीतानां शासिताऽस्य वारणे प्रभविष्यति ।
—शाकु० ६, पृ २१४

अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः ।
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥ —रघु० ४-६४

---

गुणगणस्य एव मोक्ष्यो इति एतत् 'प्रणिपातप्रतीकारः महात्मनां संरम्भः'
'गुरुजने प्रसादमोक्ष्याणि वसूनि पतन्ति, दाम्भा यत्र न पतन्ति' 'म. कुमा.
गोपीनाम् [illegible] प्रतिपन्नवहार, यत्र न प्रभूणा मन्येषु कठोरा न भवन्ति' 'सरला-

कृताः शरण्यं हरिणा तत्रासुराः शरासनं तेषु विकृष्यतामिदम् ॥
प्रसादसौम्यानि सतां सुहृज्जने पतन्ति चक्षूंषि न दारुणाः शराः ॥
-शाकु० ६-२९

विभूषणप्रत्युपहारहस्तमुपस्थितं वीक्ष्य विशांपतिस्तम् ।
सौपर्णमस्त्रं प्रतिसंजहार प्रह्वेष्वनिर्बन्धरुषो हि सन्तः
-रघु० १६-८०

राघवोऽपि चरणौ तपोनिधेः, क्षम्यतामिति वदन् समस्पृशत् ।
निर्जितेषु तरसा तरस्विनाम्, शत्रुषु प्रणतिरेव कीर्तये ॥
-रघु० ११-८९

निश्चित्य चानन्यनिवृत्ति वाच्यम्, त्यागेन पत्न्याः परिमार्ष्टुमैच्छत् ।
अपि स्वदेहात् किमुतेन्द्रियार्थात्, यशोधनानां हि यशो गरीयः ॥
-रघु० १४-३५

यदात्थ राजन्यकुमार तत्तथा, यशस्तु रक्ष्यं परतो यशोधनैः ।
जगत्प्रकाशं तदशेषमिज्यया, भवद्गुरुर्लङ्घयितुं ममोद्यतः ॥ -रघु० ३-४८

कृच्छ्रलब्धमपि लब्धवर्णभाक्, तं दिदेश मुनये सलक्ष्मणम् ।
अप्यसुप्रणयिनां रघोः कुले, न व्यहन्यत कदाचिदर्थिता ॥
-रघु० ११-२

किमप्यहिंस्यस्तव चेन्मतोऽहम् यशःशरीरे भव मे दयालुः ।
एकान्तविध्वंसिषु मद्विधानाम् पिण्डेष्वनास्था खलु भौतिकेषु ॥
-रघु० २-५७

भवानपीदं परवानवैति, महान् हि यत्नस्तव देवदारौ ।
स्थातुं नियोक्तुर्न हि शक्यमग्रे, विनाश्य रक्ष्यं स्वयमक्षतेन ॥
-रघु० २-५६

---

निर्जितेषु शत्रुषु नम्रभाव एव तरस्विनां कीर्तये—ख्यातये भवति' इत्यादिभिः वचनैः स्पष्टं प्रतिपादितम् । यशसः रक्षणं स्वदेहात् अपि यशोधनानां—क्षत्रियाणां श्रेयस्करं भवति इत्येतत् 'यशोधनानां यशः स्वदेहात् अपि गरीयः (रघु. १४-३५)'

ततः प्रहस्यापभयः पुरन्दरम्, पुनर्बभाषे तुरगस्य रक्षिता ।
**गृहाण शस्त्रं यदि सर्ग एष ते,** न खल्वनिर्जित्य रघुं कृती भवान् ॥
-रघु० ३-५१

स शुश्रुवान् मातरि भार्गवेण, पितुर्नियोगात् प्रहृतं द्विषद्वत् ।
प्रत्यग्रहीदग्रजशासनं तद्, **आज्ञा गुरूणां ह्यविचारणीया ॥**
-रघु० १४-४६

तमात्मसम्पन्नमनिन्दितात्मा, कृत्वा युवानं युवराजमेव ।
सुखानि सोऽभुङ्क्त **सुखोपरोधि, वृत्तं हि राज्ञामुपरुद्धवृत्तम् ॥**
-रघु. १८-१८

अनुकारिणि पूर्वेषाम् युक्तरूपमिदं त्वयि ।
**आपन्नाभयसत्रेषु दीक्षिताः** खलु पौरवाः ॥ -शाकु० २-१६

भस्मसात्कृतवतः पितृद्विषः पात्रसाच्च वसुधां ससागराम् ।
**आहितो जयविपर्ययोऽपि मे, श्लाघ्य** एव परमेष्ठिना त्वया ॥
-रघु० ११-८६

**स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः,**
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णम्,
शमयति परितापं छायया संश्रितानाम् ॥ -शाकु० ५-७

**दुरितैरपि कर्तुमात्मसात् प्रयतन्ते नृपसूनवो हि यत् ।**
तदुपस्थितमग्रहीदजः, पितुराज्ञेति न भोगतृष्णया ॥ -रघु० ८-२

ते पुत्रयोर्नैर्ऋतशस्त्रमार्गान् आर्द्रानिवाङ्गे सदयं स्पृशन्त्यौ ।
**अपीप्सितं क्षत्रकुलाङ्गनानाम् न वीरसूशब्दमकामयेताम् ॥**
-रघु० १४-४

---

'यशोधनं यश एव रक्ष्यम् (रघु. ३-४८) ' रघो कुले अमून् याचमानानाम् अपि अर्थिना याचना कदाचित् अपि मोघा न अभूत् (रघु ११-२) '' नश्वरेषु शरीरेषु

कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम् ।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु ॥ -शाकु० १-२१

अन्यदा जगति राम इत्ययम् शब्द उच्चरित एव मामगात् ।
व्रीडमावहति मे स संप्रति व्यस्तवृत्तिरुदयोन्मुखे त्वयि ॥
-रघु० ११-७३

मैथिलस्य धनुरन्यपार्थिवैः त्वं किलानमितपूर्वमक्षणोः ।
तन्निशम्य भवता समर्थये वीर्यशृङ्गमिव भग्नमात्मनः ॥
-रघु० ११-७२

क्षत्रियान्तकरणोऽपि विक्रमः तेन मामवति नाजिते त्वयि ।
पावकस्य महिमा स गण्यते कक्षवज्ज्वलति सागरेऽपि यः ॥ -रघु० ११-७५

रक्षोवधान्तो न च मे प्रयासः व्यर्थः स वैरप्रतिमोचनाय ।
अमर्षणः शोणितकाङ्क्षया किम् पदा स्पृशन्तं दशति द्विजिह्वः ॥
-रघु० १४-४१

तपस्यनधिकारित्वात् प्रजानां तमघावहम् ।
शीर्षच्छेद्यं परिच्छिद्य नियन्ता शस्त्रमाददे ॥ -रघु० १५-५१

ब्राह्म-क्षात्र-सहकारिसम्बन्धः[12]

स बभूव दुरासदः परैः गुरुणाऽथर्वविदा कृतक्रियः ।
पवनाग्निसमागमो ह्ययम् सहितं ब्रह्म यदस्त्रतेजसा ॥ -रघु० ८-४

---

भद्रियानां (दिलीपवंशजानाम्) यशःशरीराणाम् अनास्था (रघु २-५७) 'इत्यादि-वचनं स्पष्ट प्रतिपादितम् । अन्यत् सर्वं तत्तत् क्षात्रधर्मानुकूल सुस्पष्ट च ।

१२ 'ब्राह्मक्षात्रसहकारिसम्बन्ध' इत्यस्मिन् प्रकरणे ब्राह्मणानां क्षत्रियाणां च सहकार्यप्रदर्शकानि वचनानि सङ्गृह्यन्ते । 'नाक्षत्रं ब्रह्म भवति क्षत्र नाब्रह्म

वसिष्ठस्य गुरोर्मन्त्राः सायकास्तस्य धन्विनः ।
किं तत्साध्यं यदुभये साधयेयुर्न सङ्गताः ॥ -रघु० १७-३८

उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणां च प्रतिहर्ता त्वमापदाम् ॥ -रघु० १-६०

पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥ -रघु० १-६३

न प्रहर्तुमलमस्मि निर्दयम् विप्र इत्यभिभवत्यपि त्वयि ।
शंस किं गतिमनेन पत्रिणा हन्मि लोकमुत ते मखार्जितम् ॥ -रघु० ११-८४

अवेक्ष्य रामं ते तस्मिन् न प्रजह्रुः स्वतेजसा ।
त्राणाभावे हि शापास्त्राः कुर्वन्ति तपसो व्ययम् ॥ -रघु० १५-३

ब्राह्म-क्षात्र-विरोधसम्बन्धः[13]

पित्र्यमंशमुपवीतलक्षणम् मातृकं च धनुरूर्जितं दधत् ।
यः ससोम इव घर्मदीधितिः सद्विजिह्व इव चन्दनद्रुमः ॥ -रघु० ११-६४

राजसत्वमवधूय मातृकम् पित्र्यमस्मि गमितः शमं यदा ।
नन्वनिन्दितफलो मम त्वया निग्रहोऽप्ययमनुग्रहीकृतः ॥ -रघु० ११-९०

---

वर्धते । ब्रह्मक्षत्रं च सयुक्तं इहामुत्र च वर्धते ॥' इति मनुवचनं प्रमाणीकुर्वन् कालिदास अस्मिन् प्रकरणे उध्दृतं वचनं 'वसिष्ठस्य मन्त्रा अतिये सायका' (रघु १७-३८), ''पवनाग्निसमागमो ह्ययं, यत् अस्त्रतेजसा सहितं ब्रह्म नाम(रघु ८-४),' इत्यादिभि. वचनै. प्रकृतकल्पनां दृढीकरोति ।

१३. 'ब्राह्मक्षात्रविरोधसम्बन्धः' इत्यस्मिन् उपप्रकरणे ब्राह्मवृत्ति शीतकिरणस्य चन्द्रस्य, क्षात्रवृत्तिश्च उष्णकिरणस्य सूर्यस्य उपमानम् अर्हति, अतः इमे

तं पितुर्वधभवेन मन्युना राजवंशनिधनाय दीक्षितम् ।
बालसूनुरवलोक्य भार्गवम् स्वां दशां च विषसाद पार्थिवः ॥ -रघु० ११-६७

क्षत्रजातमपकारवैरि मे तन्निहत्य बहुशः शमं गतः ।
सुप्तसर्प इव दण्डघट्टनात् रोषितोऽस्मि तव विक्रमश्रवात् ॥ -रघु० ११-७१

अक्षबीजवलयेन निर्बभौ दक्षिणश्रवणसंस्थितेन यः ।
क्षत्रियान्तकरणैकविंशतेः व्याजपूर्वगणनामिवोद्वहन् ॥ -रघु० ११-६६

अर्घ्यमर्घ्यमिति वादिनं नृपम् सोऽनवेक्ष्य भरताग्रजो यतः ।
क्षत्रकोपदहनार्चिषं ततः संदधे दृशमुदग्रतारकाम् ॥ -रघु० ११-६९

आश्रमधर्माः[१४]

शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥ -रघु० १-८

साङ्गं च वेदमध्याप्य किञ्चिदुत्क्रान्तशैशवौ ।
स्वकृतिं गापयामास कविप्रथमपद्धतिम् ॥ -रघु० १५-३३

त्यागाय संभृतार्थानां सत्याय मितभाषिणाम् ।
यशसे विजिगीषूणा प्रजायै गृहमेधिनाम् ॥ -रघु० १-७

---

ब्राह्मक्षत्रवृत्ती परस्परं विरुद्धे इति प्रदर्शकानि वचनानि अत्र सङ्गृहीतानि । एतत् प्रकरणं सर्वथा जमदग्निपुत्रं रामं दाशरथिं रामं च विषयीकृत्य 'रघुवंशे' एकादशे सर्गे उपनिबद्धम् ।

१४ चातुर्वर्ण्यवत् चातुराश्रम्यधर्मा अपि कालिदासकाले सुस्थिरा आसन् इति अनेन 'आश्रमधर्मा' इति उपप्रकरणेन सम्यक् ज्ञातुं शक्यते । तत्रापि विशेषतः राज्ञाम् उपनिबद्धा आश्रमधर्मा अत्र सङ्गृह्यन्ते । शैशवे-ब्रह्मचर्याश्रमकाले-गृहीत-

यतिपार्थिवलिङ्गधारिणौ ददृशाते रघुराघवौ जनैः ।
अपवर्गमहोदयार्थयोर्भुवमंशाविव धर्मयोर्गतौ ॥ –रघु० ८–१६

स त्वं प्रशस्ते महिते मदीये वसंश्चतुर्थोऽग्निरिवाग्न्यगारे ।
द्वित्राण्यहान्यर्हसि सोढुमर्हन् यावद्यते साधयितुं त्वदर्थम् ॥ –रघु० ५–२५

अग्निवर्णमभिषिच्य राघवः स्वे पदे तनयमग्नितेजसम् ।
शिश्रिये श्रुतवतामपश्चिमः पश्चिमे वयसि नैमिषं वशी ॥–रघु० १९-१

अथ वीक्ष्य रघुः प्रतिष्ठितं प्रकृतिष्वात्मजमात्मवत्तया ।
विषयेषु विनाशधर्मसु त्रिदिवस्थेष्वपि निःस्पृहोऽभवत् ॥ –रघु० ८–१०

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे,
नृपतिककुदं दत्त्वा यूने सितातपवारणम् ।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये,
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥ –रघु० ३–७०

गुणवत्सुतरोपितश्रियः परिणामे हि दिलीपवंशजाः ।
पदवीं तरुवल्कवाससां प्रयताः संयमिनां प्रपेदिरे ॥ –रघु० ८–११

तत्र तीर्थसलिलेन दीर्घिकास्तल्पमन्तरितभूमिभिः कुशैः ।
सौधवासमुटजेन विस्मृतः संचिकाय फलनिःस्पृहस्तपः ॥ –रघु० १९–२

तमरण्यसमाश्रयोन्मुखं शिरसा वेष्टनशोभिना सुतः ।
पितरं प्रणिपत्य पादयोरपरित्यागमयाचतात्मनः ॥ –रघु० ८–१२

तस्मै विसृज्योत्तरकोसलानां धर्मोत्तरस्तत्प्रभवे प्रभुत्वम् ।
मृगैरजर्यं जरसोपदिष्टमदेहबन्धाय पुनर्बबन्ध ॥ –रघु० १८–७

---

विद्यानां साङ्गवेदाध्यायिनाम् यौवने–गृहस्थाश्रमकाले–विषयैषिणाम् अपि सतां 'प्रजायै गृहमेधिनां' 'नृपस्य वर्णाश्रमपालनं यत्' तदेव धर्मकार्यम् अनुतिष्ठताम्, 'महोदयार्थं पार्थिवलिङ्गधारिणां गृहीताग्निहोत्राणाम्' वार्धके–वानप्रस्थकाले–मुनिवृत्तीनां

पिता पितृणामनृणस्तमन्ते वयस्यनन्तानि सुखानि लिप्सुः । '
राजानमाजानुविलम्बिबाहुं कृत्वा कृती वल्कलवान् बभूव ॥ रघु० १८-२६

प्रथमपरिगतार्थस्तं रघुः संनिवृत्तम्
विजयिनमभिनन्द्य श्लाघ्यजायासमेतम् ।
तदुपहितकुटुम्बः शान्तिमार्गोत्सुकोऽभूत्
न हि सति कुलधुर्ये सूर्यवंश्या गृहाय ॥ -रघु० ७-७१

भवनेषु रसाधिकेषु पूर्वं क्षितिरक्षार्थमुशन्ति ये निवासम् ।
नियतैकयतिव्रतानि पश्चात् तरुमूलानि गृहीभवन्ति तेषाम् ॥
-शा० ७-२०

भूत्वा चिराय चतुरन्तमहीसपत्नी,
दौष्यन्तिमप्रतिरथं तनयं निवेश्य ।
भर्त्रा तदर्पितकुटुम्बभरेण सार्धं,
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥ -शा० ४-१९

रघुरश्रुमुखस्य तस्य तत्कृतवानीप्सितमात्मजप्रियः ।
न तु सर्प इव त्वचं पुनः प्रतिपेदे व्यपवर्जितां श्रियम् ॥-रघु० ८-१३

रामोऽपि सह वैदेह्या वने वन्येन वर्तयन् ।
चचार सानुजः शान्तो वृद्धेक्ष्वाकुव्रतं युवा ॥ -रघु० १२-२०

स किलाश्रममन्त्यमाश्रितो निवसन्नावसथे पुराद्बहिः ।
समुपास्यत पुत्रभोग्यया स्नुषयेवाविकृतेन्द्रियः श्रिया ॥ -रघु० ८-१४

स क्षेमधन्वानममोघधन्वा पुत्रं प्रजाक्षेमविधानदक्षम् ।
क्ष्मां लम्भयित्वा क्षमयोपपन्नं वने तपः क्षान्ततरश्चचार ॥ -रघु० १८-९

---

' मुनिवनतरुच्छाया श्रितवना, नियतैकयतिव्रतानि तरुमूलानि गृहीकुर्वता, वल्कलवता, स्वे पदे स्वसूनुं यथाविधि अभिषिक्तवता, विषयव्यावृत्तात्मना शान्तिमार्गोत्सुकानाम्,

स गत्वा सरयूतीरं देहत्यागेन योगवित् ।
चकारावितथां भ्रातुः प्रतिज्ञां पूर्वजन्मनः ॥ –रघु० १५-९५

यद्गोप्रतरकल्पोऽभूत् सम्मर्दस्तत्र मज्जताम् ।
अतस्तदाख्यया तीर्थं पावनं भुवि पप्रथे ॥ –रघु० १५-१०१

राज्याभिषेकः[१५]

अनुभूय वसिष्ठसम्भृतैः सलिलैस्तेन सहाभिषेचनम् ।
विशदोच्छ्वसितेन मेदिनी कथयामास कृतार्थतामिव ॥ –रघु० ८-३

अथाभिषेकं रघुवंशकेतोः प्रारब्धमानन्दजलैर्जनन्योः ।
निर्वर्तयामासुरमात्यवृद्धास्तीर्थाहृतैः काञ्चनकुम्भतोयैः ॥
–रघु० १४-७

सरित्समुद्रान् सरसीश्च गत्वा रक्षःकपीन्द्रैरुपपादितानि ।
तस्यापतन् मूर्ध्नि जलानि जिष्णोः विन्ध्यस्य मेघप्रभवा इवापः ॥
–रघु० १४-८

स मौलिरक्षोहरिभिः ससैन्यस्तूर्यस्वनानन्दितपौरवर्गः ।
विवेश सौधोद्गतलाजवर्षाम् उत्तोरणामन्वयराजधानीम् ॥
–रघु० १४-१०

---

तपैव अन्ते आश्रमे तनुत्यजा, तत्र तत्र च स्वदेहत्यागेन तीर्थक्षेत्र प्रवर्त्तयता तैरेषा नृपाणा सम्यक् आश्रमधर्मा सद्ग्रथिता ।

१५.' राज्याभिषेकः ' -इत्यस्मिन् उपप्रकरणे उद्धृतेभ्य वचनेभ्य अभिषेकस्य पद्धति, अभिषेकजलाना वर्णनम्, छत्रचामरयो उपचार, सुवर्णसिंहासनम्, नीराजनादिविषय च प्राधान्येन ज्ञातु शक्यन्ते । अत्र प्रकरणे रामस्य राज्याभिषेक अतिशयेन राज्याभिषेक विस्तरेण उपवर्णित उपलभ्यते । रघुवंशे चतुर्दशे सर्गे अमात्यवृद्धाः तीर्थाहृतं सुवर्णकुम्भतोयं अभिषेक निर्वर्तयामासु इति उपवर्ण्य तच्च जलं प्रमुखाभ्य सरिद्भ्य समुद्रेभ्य सरोभ्यश्च समानीतम् आसीत् इति (रघु १४-८) अत्र उपवर्णितम् । सामन्तादिभि. सुहृद्भि मन्त्रिभिश्च सह वंशपरम्परागता राजधानी

सौमित्रिणा सावरजेन मन्दम् आधूतबालव्यजनो रथस्थः ।
धृतातपत्रो भरतेन साक्षाद् उपायसङ्घात इव प्रवृत्तः ॥ -रघु० १४-११

ते तस्य कल्पयामासुरभिषेकाय शिल्पिभिः ।
विमानं नवमुद्वेदि चतुःस्तम्भप्रतिष्ठितम् ॥ -रघु० १७-९

तत्रैनं हेमकुम्भेषु संभृतैस्तीर्थवारिभिः ।
उपतस्थुः प्रकृतयो भद्रपीठोपवेशितम् ॥ -रघु० १७-१०

दूर्वायवाङ्कुरप्लक्षत्वगभिन्नपुटोत्तराम् ।
ज्ञातिवृद्धैः प्रयुक्तान् स भेजे नीराजनाविधीन् ॥ -रघु० १७-१२

पुरोहितपुरोगास्तं जिष्णुं जैत्रैरथर्वभिः ।
उपचक्रमिरे पूर्वमभिषेक्तुं द्विजातयः ॥ -रघु० १७-१३

स तावदभिषेकान्ते स्नातकेभ्यो ददौ वसु ।
यावतैषां समाप्येरन् यज्ञाः पर्याप्तदक्षिणाः ॥ -रघु० १७-१७

स्वर्गामिनस्तस्य तमैकमत्यादमात्यवर्गः कुलतन्तुमेनम् ।
अनाथदीनाः प्रकृतीरवेक्ष्य साकेतनाथं विधिवच्चकार ॥
-रघु० १८-३६

---

यदा राम विवेश तदा रथस्थे तस्मिन् लक्ष्मणेन बालव्यजनम् आधूतम्, भरतेन च आतपत्र धृतम् इति सम्यक् वर्णितम् (रघु. १४.१०–११) । अतिथिविषयेऽपि तस्य पितु काकुत्स्थस्य अन्तिमाम् आज्ञाम् अनुसृत्य मन्त्रिवृद्धा चतुर्षु स्तम्भेषु प्रतिष्ठिते नवे मण्डपे सम्यक् स्थापिते भद्रपीठाख्ये सिंहासने उपवेशितम् अतिथिम् अभिषिषिचु । तत्र तस्य अनिर्थे पौरै ज्ञातिवृद्धैः च नैके नीराजनादिविषय सम्यक् सम्पादिता । प्रधाना पुरोहिताः च अथर्ववेदोध्दृतै मन्त्रै सस्कार सम्पादयामासु रघु १७, ९-१३। अभिषेकसमये च ' सर्वेषा बन्धनात् मोक्ष ' इति परिपाटी आसीत् इत्यपि ज्ञायते । प्रकृतीनाम् अनाथदीनत्व राज्याभिषेकस्य प्रधान कारणम् आसीत् इति सुदर्शनस्य राज्याभिषेकवर्णनात् ज्ञातु शक्यते। स्वसुत राज्ये अभिषिच्य एव सर्वेषा राज्ञा निवृत्ति-विषयिणी प्रवृत्ति आसीत् इत्यपि तत्र तत्र समागतेन वर्णनेन अतीव सुस्पष्ट वर्तते रघु. ३-७० इ इ । वस्यास्चन राजपुत्र्याः अथवा राज्ञ्या राज्याभिषेक इति कुत्रापि

मदात्मसंभवं राज्ये मन्त्रिवृद्धाः समादधुः ।
स्मरन्तः पश्चिमामाज्ञां भर्तुः सङ्ग्रामयायिनः ॥ -रघु० १७-८

स राज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ ।
दिनान्ते निहितं तेजः सवित्रेव हुताशनः ॥ -रघु० ४-१

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्त्वा यूने सितातपवारणम् ।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥ -रघु० ३-७०

ततः प्रजाना चिरमात्मना धृतां नितान्तगुर्वीं लघयिष्यता धुरम् ।
निसर्गसंस्कारविनीत इत्यसौ नृपेण चक्रे युवराजशब्दभाक् ॥
-रघु० ३-३५

बन्धच्छेदं स बद्धानां वधार्हाणामवध्यताम् ।
धुर्याणां च धुरो मोक्षमदोहं चादिशन् गवाम् ॥ -रघु० १७-१९

तैः कृतप्रकृतिमुख्यसंग्रहैराशु तस्य सहधर्मचारिणी ।
साधु दृष्टशुभगर्भलक्षणा प्रत्यपद्यत नराधिपश्रियम् ॥ -रघु० १९-५५

तं भावार्थं प्रसवसमयाकाङ्क्षिणीनां प्रजानाम्
अन्तर्गूढं क्षितिरिव नभोबीजमुष्टिं दधाना ।
मौलैः सार्धं स्थविरसचिवैर्हेमसिंहासनस्था
राज्ञी राज्यं विधिवदशिषद् भर्तुरव्याहताज्ञा ॥ -रघु० १९-५७

---

न वर्णितम्, तथापि अग्निवर्णे मृते तस्य पत्न्यै मन्त्रिभि प्रकृतिमुख्यानाम् अनुमत्या नराधिपश्री प्रदत्ता इति स्पष्टम् उपवर्णितम् (रघु १९-५५) । ततश्च गर्भवती सा राज्ञी मन्त्रिभि आप्तैं च हेमसिंहासने स्थापिता, सा च भर्तु राज्य यथाविधि अशात् इति (रघु १९-५७) कालिदासेन वर्णितम् । अतः अयम् अपि महत्त्वपूर्ण. भाग. यत् अग्निवर्णस्य पत्नी तदा राज्यम् अकरोत् इति ।

## सिंहासनाधिकारः[१६]

चित्रकूटवनस्थं च कथितस्वर्गतिर्गुरोः ।
लक्ष्म्या निमन्त्रयाञ्चक्रे तमनुच्छिष्टसम्पदा ॥ –रघु० १२-१५

स हि प्रथमजे तस्मिन्नकृतश्रीपरिग्रहे ।
परिवेत्तारमात्मानं मेने स्वीकरणाद्भुवः । –रघु १२-१६

तमशक्यमपाक्रष्टुं निदेशात्स्वर्गिणः पितुः ।
ययाचे पादुके पश्चात्कर्तुं राज्याधिदेवते ॥ –रघु० १२-१७

स विसृष्टस्तथेत्युक्त्वा भ्रात्रा नैवाविशत्पुरीम् ।
नन्दिग्रामगतस्तस्य राज्यं न्यासमिवाभुनक् –रघु० १२-१८

अथेतरे सप्तरघुप्रवीरा ज्येष्ठं पुरोजन्मतया गुणैश्च
चक्रुः कुशं रत्नविशेषभाजं सौभ्रात्रमेषां हि कुलानुसारि ॥ –रघु० १६-१

नरेन्द्रमूलायतनादनन्तरं तदास्पदं श्रीर्युवराजसंज्ञितम् ।
अगच्छदंशेन गुणाभिलाषिणी नवावतारं कमलादिवोत्पलम् –रघु० ३-६

दुरितैरपि कर्तुमात्मसात्प्रयतन्ते नृपसूनवो हि यत् ।
तदुपस्थितमग्रहीदजः पितुराज्ञेति न भोगतृष्णया । –रघु० ८-२

---

१६. 'सिंहासनाधिकारः' इत्यस्मिन् उपप्रकरणे ज्येष्ठभ्रातुः एव सिंहासने अधिकारः, केनापि कारणेन कनिष्ठस्य मध्यमस्य वा तत् सिंहासनं प्राप्त चेत् तर्हि न केवलं मर्यादातिक्रम. किन्तु तत्र पावित्र्यभङ्ग. अपि भवति इति कल्पनायाः विलास. अत्र प्रकरणे सङ्कलितेभ्य. वचनेभ्य. सम्यक् ज्ञातु शक्यते । राज्ञ. दशरथात् वरद्वय- रूपेण कैकेय्या रामस्य द्वादशवर्षपर्यन्त वनगमनं भरतस्य च राज्याभिषेक. सम्पादितः आसीत् । तद्वरद्वयानुसार दाशरथौ रामे वन गते मातुलगृहात् सम्प्राप्तेन भरतेन यत् सर्वलोकप्रसिद्ध वृत्तम् आचरित तेन सिंहासनेन केवलम् अधिकारकल्पना एव, किन्तु पावित्र्यकल्पना अपि स्पष्टं भवति । 'भरतः अनुच्छिष्टसम्पदा लक्ष्म्या रामं निमन्त्रयाञ्चक्रे,', 'रामे अकृतश्रीपरिग्रहे भरतः आत्मान परिवेत्तार मेने,' 'रामं प्रत्यानेतुम् असमर्थः तस्य पादुके राज्याधिकारे कर्तुं ययाचे' 'तस्य राज्य न्यासम्

अद्धा श्रियं पालितसङ्गराय प्रत्यर्पयिष्यत्यनघां स साधुः ।
हत्वा निवृत्ताय मृधे खरादीन् संरक्षितां त्वामिव लक्ष्मणो मे ॥
–रघु० १३–६५

पित्रा विसृष्टां मदपेक्षया यः श्रियं युवाप्यङ्कगतामभोक्ता
इयन्ति वर्षाणि तया सहोग्रमभ्यस्यतीव व्रतमासिधारम् ॥ –रघु० १३–६७

इक्ष्वाकुवंशगुरवे प्रयत. प्रणम्य सभ्रातरं भरतमर्घ्यपरिग्रहान्ते ।
पर्यश्रुरस्वजत मूर्धनि चोपजघ्रौ तद्भक्त्यपोढपितृराज्यमहाभिषेके ॥
–रघु० १३–७०

दृढभक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः ।
मातुः पापस्य भरतः प्रायश्चित्तमिवाकरोत् ॥ –रघु० १२–१९

दुरितैरपि कर्तुमात्मसात्प्रयतन्ते नृपसूनवो हि यत् ।
तदुपस्थितमग्रहीदजः पितुराज्ञेति न भोगतृष्णया ॥ –रघु० ८–२

राज्यप्रदेशस्य विभजनम्[17]

स तक्षपुष्कलौ पुत्रौ राजधान्योस्तदाख्ययोः ।
अभिषिच्याभिषेकार्हौ रामान्तिकमगात्पुनः ॥ –रघु० १६–८९

---

इव अमुनक्' इत्यादिभिः वर्णनैः ज्येष्ठभ्रातृ विषये यथा दृढभक्तित्व तथैव सिंहासनविषये अपि पावित्र्यकल्पना स्पष्ट प्रतीता भवति । 'इक्ष्वाकुवंशगुरवे' इत्यस्मिन् श्लोके रामोऽपि 'रामविषयकभक्त्यैव येन पितृराज्यमहाभिषेक परिहृतः तस्य भरतस्य मूर्धनि उपजघ्रौ (आशिषा सयुयोज) इति वर्णितम् । 'राजपुत्रा मदोद्वृत्ता गजा इव निरङ्कुशाः । भ्रातर पितर वापि विघ्नन्त्येवाभिमानिनः ॥' इति वर्णनम् अनुसृत्य केवल भोगतृष्णया सिंहासनाधिकार न वाञ्छन्ति स्म इति 'दुरितैरपि' (रघु० ८–२) इत्यनेन स्पष्टीकृतम् ।

१७ '**राज्यप्रदेशस्य विभजनम्**' इत्यस्मिन् प्रकरणे ज्येष्ठापत्यस्य एव परम्परया सर्वं राज्य दातव्यम् इति सर्वविश्रुता, विशेषत रूढा च कल्पना परित्यज्य सर्वेभ्यः अपि पुत्रेभ्य. राज्यप्रदेशस्य विभजन कृत्वा कोऽपि भागः दातव्य इत्याशय-

स निवेश्य कुशावत्यां रिपुनागाङ्कुशं कुशम् ।
शरावत्यां सतां सूक्तैर्जनिताश्रुलवं लवम् ॥
(–उदक् प्रतस्थे) –रघु० १५-९७

अङ्गदं चन्द्रकेतुं च लक्ष्मणोऽप्यात्मसंभवौ ॥
शासनाद् रघुनाथस्य चक्रे कारापथेश्वरौ ॥ –रघु० १५-९०

शत्रुघातिनि शत्रुघ्नः सुबाहौ च बहुश्रुते ।
मधुराविदिशे सून्वोर्निदधे पूर्वजोत्सुकः ॥ –रघु० १५-३६

युधाजितश्च संदेशात् स देशं सिन्धुनामकम् ।
ददौ दत्तप्रभावाय भरताय भृतप्रजः ॥ –रघु० १५-८७

राजचिह्नानि[१८]

अथ स विषयव्यावृत्तात्मा यथाविधिसूनवे
नृपतिककुदं दत्वा यूने सितातपवारणम् । –रघु० ३-७०

---

प्रदर्शकानि वचनानि अत्र सङ्गृह्यन्ते । 'रघुवंशे' पञ्चदशे सर्गे अयं विचारः विस्तरेण वर्णित । 'शत्रुघातिनि सुबाहौ च मधुराविदिशे इत्याख्ये नगर्यौ शत्रुघ्नः निदधे' (रघु १५-३६) । 'लक्ष्मणः अङ्गद चन्द्रकेतु च कारापथदेशस्य ईश्वरौ नाम समानाधिकारौ अधिपती चकार (रघु. १५-९०) । ''रामः कुशावत्यां कुशं स्थापयित्वा शरावत्यां लव स्थापयामास' । 'भरतः तु अभिषेकार्हौ तक्षपुष्कलौ तदाख्ययोः राजधान्यो. अभिषिक्तवान्' इत्यादिभिः उपन्यस्तैः वर्णनै एतत् स्पष्टं भवति यत्, केवल ज्येष्ठभ्रातु एव युवराजपदम् अथवा राज्याभिषेकः अथवा राज्याधिकारः न, किन्तु सर्वेषाम् अपि राजापत्यानां समान. एव राज्याधिकारः, समानमेव राजपदम् इत्यपि कल्पना प्राक् कदापि विकसिता आसीत् ।

१८. राजचिह्नानि– इत्यस्मिन् प्रकरणे प्रसिद्धानि छत्रचामरादीनि चक्रवर्तिलक्षणादीनि च विशिष्टानि सङ्गृहीतानि । सितच्छत्र, चामरे, सिंहासनम् इति सामान्यानि सर्वेषां राज्ञां चिह्नानि । एषां लक्षणानां व्यवहारः श्रीलक्षणम्' (कुमार ७-४५) इति शब्देनापि कृत. । चक्रवर्त्यादिविशिष्टानि लक्षणानि बहुपु

जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसंमिताक्षरम् ।
**अदेयमासीत्त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे** ॥ -रघु० ३-१६

तस्यैकरयोच्छ्रितं छत्रं मूर्ध्नि तेनामलत्विषा ।
पूर्वराजवियोगौष्म्यं कृत्स्नस्य जगतो हृतम् ॥ -रघु० १७-३३

तं लोकपालाः पुरुहूतमुख्याः **श्रीलक्षणोत्सर्गविनीतवेषाः**
दृष्टिप्रदाने कृतनन्दिसंज्ञास्तद्दर्शिताः प्राञ्जलयः प्रणेमुः ॥ -कु० ७-४५

पद्मा **पद्मातपत्रेण** भेजे **साम्राज्यदीक्षितम्** ।
छायामण्डललक्ष्येण तमदृश्या किल स्वयम् ॥ -रघु० ४-५

अनेन्यवस्तुप्रणयप्रसारितो विभाति **जालग्रथिताङ्गुलिः करः** ।
अलक्ष्यपत्रान्तरमिद्धरागया नवोषसा भिन्नमिवैकपङ्कजम् ॥ -शा० ७-१६

यत् कुम्भयोनेरधिगम्य रामः कुशाय राज्येन समं दिदेश ।
तदस्य **जैत्राभरणं विहर्तुरज्ञातपत्रं** सलिले ममज्ज ॥ -रघु० १६-७२

सममेव समाक्रान्तं द्वयं द्विरदगामिना ।
तेन **सिंहासनं पित्र्यमखिलं चारिमण्डलम्** ॥ -रघु० ४-४

सौमित्रिणा सावरजेन मन्दमाधूत**बालव्यजनो** रथस्थः ।
**धृतातपत्रो भरतेन** साक्षात् उपायसंघात इव प्रवृद्धः ॥ -रघु० १४-११

तथाभाविनमेनं **चक्रवर्तिनम**वगच्छतु भवान् । पश्य ।

**रथेनानुद्धात**स्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः ।

---

स्थलेषु उपयुज्यन्ते । केषाञ्चन च अत्र सङ्ग्रहः । प्रायः राजा राज्याभिषेकसमये स्वसूनवे इमानि राजचिह्नानि परम्परया दातव्यानि इति परिपाटी । अन्यसमं कर्म

इह्यायं सत्त्वानां प्रसभदमनात्सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥ –शा० ७–३३

## राज्ञां विशिष्टविवाहाः[१९]

गान्धर्वेण विवाहेन बह्व्यो राजर्षिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः ॥ –शाकुं० ३–२०

यन्मिथःसमयादिमां मदीयां दुहितरं भवानुपायंस्त
तन्मया प्रीतिमता युवयोरनुज्ञातम् । –शाकुं० अं. ५, पृ. १६५

तापसी— कस्तस्य धर्मदारपरित्यागिनो नाम सङ्कीर्तयितुं
चिन्तयिष्यति । –शाकुं. अं. ७. पृ. २४७

अथेश्वरेण क्रथकैशिकानां स्वयंवरार्थं स्वसुरिन्दुमत्याः ।
आप्तः कुमारानयनोत्सुकेन भोजेन दूतो रघवे विसृष्टः ॥
तं श्लाघ्यसम्बन्धमसौ विचिन्त्य दारक्रियायोग्यदशं च पुत्रम् ॥
प्रस्थापयामास ससैन्यमेनमृद्धां विदर्भाधिपराजधानीम् ॥ –रघु० ४.३९,४०.

मनुष्यवाह्यं चतुरस्रयानमध्यास्य कन्या परिवारशोभि ।
विवेश मञ्चान्तरराजमार्गं पतिंवरा क्लृप्तविवाहवेषा ॥ –रघु० ६–१०

सांनिध्ययोगात्किल तत्र शच्याः स्वयंवरक्षोभकृतामभावः ।
काकुत्स्थमुद्दिश्य समत्सरोऽपि शशाम तेन क्षितिपाललोकः ॥ –रघु० ७–३

---

अपि केनापि कारणेन एतानि न दातव्यानि । तदाह 'अदेयम् आसीत् त्रयमेव भूपतेः' (रघु. ३–१६) ।

१९. 'राज्ञां विवाहविषयः तत्र महिषीस्थानं च' अस्मिन् प्रकरणे नृपान् उद्दिश्य विहितानां विवाहविधीनां सन्दर्भपराणि वचनानि सङ्गृह्यन्ते । स्मृत्युक्तेषु अष्टसु विवाहविधिषु गान्धर्वविवाह नृपाणां विहितः इति 'अभिज्ञानशाकुन्तले' 'गान्धर्वेण विवाहेन बह्व्यो राजर्षिकन्यकाः परिणीताः श्रूयन्ते' इति दुष्यन्तस्य

तस्य वीक्ष्य ललितं वपुः शिशोः पार्थिवः प्रथितवंशजन्मनः ।
स्वं विचिन्त्य च धनुर्दुरानमं पीडितो दुहितृशुल्कसंस्थया ॥
-रघु० ११-३८

दृष्टसारमथ रुद्रकार्मुके वीर्यशुल्कमभिनन्द्य मैथिलः ।
राघवाय तनयामयोनिजां रूपिणीं श्रियमिव न्यवेदयत् ॥ -रघु० ११-४७

अनसूया-- वयस्य, बहुवल्लभा राजानः श्रूयन्ते । -शाकु ३, पृ. १०५

राजा-- परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे ।
समुद्रवसना चोर्वी सखी च युवयोरियम् ॥ -शाकु ३-१७

काश्यपः— [ अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मनः ।
त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम् । ]
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
[ भाग्यायत्तमतःपरं न खलु तद्वाच्यं वधूबन्धुभिः ॥ ]
-शाकु० ४-१६, पृ. १४२

---

वचनम् "यन्मिथ समयात् इमां मदीयां दुहितरं भवान् उपायस्त तत् मया प्रीतिमता अनुज्ञातम्' इति शार्ङ्गरवद्वारा कण्वकृते निवदन च स्पष्ट प्रतिपादयति। किञ्च 'शाकुन्तले' सप्तमेऽङ्के 'क तस्य धर्मदारपरित्यागिन (दुष्यन्तस्य) नाम गृह्णीयात्' इति तापसीवचनेन राजर्षीणां विषये गान्धर्वविवाहस्य परमधार्मिकत्व स्पष्ट प्रतिपादित भवति। गान्धर्वविवाहवत् विवाहस्य स्वयवरपद्धति अपि क्षत्रियाणां कृते विशिष्य च नृपाणां कृते निरूढा आसीत् इति इन्दुमतीस्वयवरवर्णनेन सीतास्वयवरवर्णनेन च व्यक्त भवति। स्वयवरविषये गान्धर्वविवाहविषये च अय भेद स्पष्ट कालिदासीयवाङ्मयात् इव भवति यत्, वधूवरयो मिथःसमयात् गान्धर्वविवाहः, यथा शकुन्तलादुष्यन्तयोः, स्वयवरे च समुपस्थितानां सर्वेषां वरेण्यानां नृपाणाम् अन्येषां च समक्ष पित्राद्यनुमत्या अभिमतवरस्य सवरणम् इति पद्धतिः आसीत्। स्वयवरेऽपि अन्या वीर्यशुल्कपद्धति प्ररूढा आसीत् यथा सीतायाः स्वयवरे अन्यत्र च द्रौपदीस्वयवरादिषु। तथा च कालिदासः सीतास्वयवरप्रसङ्गे समुदाहरति 'दुहितृशुल्कसंस्थया' 'वीर्यशुल्कम्' इत्यादि।

अथाग्र्यमहिषी राज्ञः प्रसूतिसमये सती।
पुत्रं तमोपहं लेभे नक्तं ज्योतिरिवौषधिः ॥ –रघु० १०-६६

गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥ –रघु० ८-६७

तात शुद्धा समक्षं नः स्नुषा ते जातवेदसि।
दौरात्म्याद्रक्षसस्तां तु नात्रत्याः श्रद्दधुः प्रजाः ॥
ताः स्वचारित्रमुद्दिश्य प्रत्याययतु मैथिली।
ततः पुत्रवतीमेनां प्रतिपत्स्ये त्वदाज्ञया ॥

इति प्रतिश्रुते राज्ञा जानकीमाश्रमान्मुनिः।
शिष्यैरानाययामास स्वसिद्धिं नियमैरिव ॥

अन्येद्युरथ काकुत्स्थः संनिपात्य पुरौकसः।
कविमाह्वाययामास प्रस्तुतप्रतिपत्तये ॥ –रघु० १५-७२...७५

सा दृष्टिविषये भर्तुर्मुनिरास्थितविष्टरः।
कुरु निःसंशयं वत्से स्ववृत्ते लोकमित्यशात् ॥ –रघु० १५-७९

---

नृपाणां बहुभार्यात्वं च सर्वथा प्रचलितम् आसीत् इत्यादि 'बहुवल्लभा राजानः श्रूयन्ते' (शाकु ३, पृ १०५) 'परिग्रहबहुत्वेऽपि' (शा. ३, श्लोक १७) 'दारेषु सामान्यप्रतिपूर्वकमिव दृश्या' (शाकु ४, श्लो १६) इत्यादिभि वचनैं सम्यक् ज्ञातु शक्यते। यद्यपि सर्वेषाम् एव बहुभार्यात्वं न निषिद्धम् आसीत् तथापि नृपाणा विषये एव तत् प्राय विशेषत रूढम् आसीत् इत्येतत् 'बहुवल्लभा राजान श्रूयन्ते' इतिवचनेन अभिव्यज्यते।

'महिषीत्वम् अपि कस्यै दातव्यम् तस्या आचरण कथम्, तस्या स्वीकारे परित्यागे च राजा एव केवल प्रभविष्णु, उत अत्रापि प्रकरणे लोकेच्छाया एव बलीयस्त्वम् आसीत्, इति 'रघुवंशे' पञ्चदशे सर्गे वाल्मीकिरामचन्द्रयो सीता-विषयकेण सवादेन सुस्पष्ट भवति। वाल्मीकि रामचन्द्राय यदा सपुत्राया सीताया परिग्रहार्थं न्यवेदयन् तदा रामः प्रत्युत्तरयति 'हे तात, ते स्नुषा न समक्ष अग्नौ

## विश्वजिदश्वमेधयज्ञवर्णनम्[२०]

स विश्वजितमाजह्रे यज्ञं **सर्वस्वदक्षिणम्** ।
आदानं हि विसर्गाय सतां वारिमुचामिव ॥ -रघु० ४-८६

तमध्वरे विश्वजिति क्षितीशं **निःशेषविश्राणितकोशजातम्**
उपात्तविद्यो गुरुदक्षिणार्थी कौत्सः प्रपेदे वरतन्तुशिष्यः ॥ रघु० ५-१

स्थाने भवानेकनराधिपः सन्नकिञ्चनत्वं मखजं व्यनक्ति ।
पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥ -रघु० ५-१६

पुत्रो रघुस्तस्य पदं प्रशास्ति **महाक्रतोर्विश्वजितः प्रयोक्ता** ।
चतुर्दिगावर्जितसम्भृतां यो **मृत्पात्रशेषामकरोद्विभूतिम्** ॥ -रघु० ६-८६

जातः कुले तस्य किलोरुकीर्तिः कुलप्रदीपो नृपतिर्दिलीपः ।
**अतिष्ठदेकोनशतक्रतुत्वे** शक्राभ्यसूयाविनिवृत्तये यः ॥ -रघु० ६-७४

नियुज्य तं होमतुरङ्गरक्षणे धनुर्धरं राजसुतैरनुद्रुतम् ।
**अपूर्णमेकेन शतक्रतूपमः** शतं क्रतूनामपविघ्नमाप सः ॥ -रघु० ३-३८

ततः परं तेन मखाय यज्वना **तुरङ्गमुत्सृष्टमनर्गलं** पुनः ।
धनुर्भृतामग्रत एव रक्षिणां **जहार शक्रः** किल गूढविग्रहः ॥ -रघु० ३-३९

मखांशभाजां प्रथमो मनीषिभिस्त्वमेव देवेन्द्र सदा निगद्यसे ।
अजस्रदीक्षाप्रयतस्य मद्गुरोः **क्रियाविघाताय** कथं प्रवर्तसे ॥ -रघु० ३-४४

---

२० 'विश्वजिदश्वमेधयज्ञवर्णनम्' इत्यस्मिन् उपप्रकरणे राजभिः कृतानाम् एतद्विषयकाणि वचनानि सङ्गृहीतानि । दिग्विजयानन्तरं तत्र प्राप्तं सर्वं द्रव्यं विश्वजिद्यज्ञद्वारा सर्वेभ्यः दातव्यं स्वयञ्च पुनरपि रिक्तेन भाव्यम् इत्येतत् 'सर्वस्वदक्षिणं यज्ञम्' 'विश्वजिति निःशेषविश्राणितकोशजातम्' 'मखजम् अकिञ्चनत्वम्' 'विभूतिं मृत्पात्रशेषाम्' इत्यादिभिः वर्णनैः सर्वस्वदक्षिणस्वरूपम् अस्य यज्ञस्य सम्यक् ज्ञातुं शक्यते । तथा विश्वजिद्यज्ञवर्णनावसरे च अयम् आशयः सम्यक् विवेचितः । अश्वमेधयज्ञेषु क्रियमाणेषु शक्राभ्यसूयाविनिवृत्तये दिलीपः नवनवति

यदात्थ राजन्यकुमार तत्तथा यशस्तु रक्ष्यं परतो यशोधनैः ।
जगत्प्रकाशं तदशेषमिज्यया भवद्गुरुर्लङ्घयितुं ममोद्यतः ॥
-रघु० ३-४८

हरिर्यथैकः पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यम्बक एव नापरः ।
तथा विदुर्मां मुनयः शतक्रतुं द्वितीयगामी न हि शब्द एष नः ॥
-रघु० ३-४९

अतोऽयमश्वः कपिलानुकारिणा पितुस्त्वदीयस्य मयापहारितः ।
अलं प्रयत्नेन तवात्र मा निधाः पदं पदव्यां सगरस्य सन्ततेः ॥
-रघु० ३-५०

ततः प्रहस्यापभयः पुरन्दरम् पुनर्बभाषे तुरगस्य रक्षिता ।
गृहाण शस्त्रं यदि सर्ग एष ते न खल्वनिर्जित्य रघुं कृती भवान् ॥
-रघु० ३-५१

असङ्गमद्रिष्वपि सारवत्तया न मे त्वदन्येन विसोढमायुधम् ।
अवेहि मां प्रीतमृते तुरङ्गमात् किमिच्छसीति स्फुटमाह वासवः ॥
-रघु० ३-६३

इति क्षितीशो नवतिं नवाधिकाम् महाक्रतूनां महनीयशासनः ।
समारुरुक्षुर्दिवमायुषः क्षये ततान सोपानपरम्परामिव ॥ -रघु० ३-६९

तमध्वराय मुक्ताश्वं रक्षःकपिनरेश्वराः ।
मेघाः सस्यमिवाम्भोभिरभ्यवर्षन्नुपायनैः ॥ -रघु० १५-५८

विधेरधिकसंभारस्ततः प्रववृते मखः ।
आसन् यत्र क्रियाविघ्ना राक्षसा एव रक्षिणः ॥ -रघु० १५-६२

---

यज्ञात् प्रकल्प्य स्वस्थः अभूत्' इति वर्णनात् 'गूढविग्रह शत्रु तुरङ्गं जहार' इत्यादिवर्णनेन इन्द्रस्य अश्वमेधानां शतसङ्ख्यायाः परिपूर्णायां स्वस्थानात् च्युतेः विपत्ती भीतिः आसीत् इत्येतत् ज्ञातुं शक्यते । तदर्थम् एव च समग्रं दिलीपस्य अश्वमेधवर्णनम् अत्र सङ्गृहीतम् । 'सामन्तं अध्वराय मुक्ते अश्वे उपायनैः

योऽसौ राजसूययज्ञदीक्षितेन मया राजपुत्रशतपरिवृतं गोप्तारं वसुमित्रमादिश्य सवत्सरोपावर्तनीयः निरर्गलः तुरगो विसृष्टः। स सिन्धोर्दक्षिणे रोधसि चरन्नश्वानीकेन यवनाना प्रार्थितः। तत उभयो सेनयोर्महानासीत् संमर्दः। —मालविका० ५, पृ १४८

तत परान् पराजित्य वसुमित्रेण धन्विना।
प्रसह्य ह्रियमाणो मे वाजिराजो निवर्तितः॥ —मालविका० ५-१५

## राजकृत-विद्वत्सभाजनम्[21]

तं भूपतिर्भासुरहेमराशिम् लब्धं कुबेरादभियास्यमानात्।
दिदेश कौत्साय समस्तमेव पादं सुमेरोरिव वज्रभिन्नम्॥ —रघु० ५-३०

बलमार्तभयोपशान्तये विदुषां सत्कृतये बहुश्रुतम्।
वसु तस्य विभोर्न केवलम् गुणवत्ताऽपि परप्रयोजना॥ —रघु० ८-३१

कृच्छ्रलब्धमपि लब्धवर्णभाक् त दिदेश मुनये सलक्ष्मणम्।
अप्यसुप्रणयिना रघोः कुले न व्यहन्यत कदाचिदर्थिता॥ —रघु० ११-२

ता स्वचारिभ्यमुद्दिश्य प्रत्याययतु मैथिली।
तत पुत्रवतीमेना प्रतिपत्स्ये त्वदाज्ञया॥

---

अलङ्करणम्', 'विरोधकैश्च यज्ञीयाश्वस्य निराध', 'ततश्च परान् पराजित्य, यज्ञीयाश्वस्य पुन अनिरुद्धगत्या सञ्चरणम्' इत्यादि अत्र प्रकरणे समुद्धृतः वचनं विस्तरेण ज्ञातु शक्यते।

२१ 'राजकृतविद्वत्सभाजनम्' इत्यस्मिन उपप्रकरणे राजभिः विदुषा संभाजन कथ कृतम् इत्येतत्प्रदर्शकानि वचनानि सङ्गृह्यन्ते। 'कौत्साय समस्तम् एव भासुरहेमराशि रघु दिदेश' 'विश्वामित्राय सलक्ष्मण राम दशरथ दिदेश' इति सर्वसम्पत्त्यागेन अत्यदानेन च राजभिः कृत विद्वत्सभाजनम्, 'निदेशप्रियया उत्सुक मे मन अर्हत तव केवलेन आगमनेन न तृप्तम्,' 'विनीतवेषेण प्रवेष्टव्यानि

इति प्रतिश्रुते राज्ञा जानकीमाश्रमान्मुनिः ।
शिष्यैरानाययामास स्वसिद्धिं नियमैरिव ॥
अन्येद्युरथ काकुत्स्थः सन्निपात्य पुरौकसः ।
कविमाह्वाययामास प्रस्तुतप्रतिपत्तये ॥
तां दृष्टिविषये भर्तुर्मुनिरास्थितविष्टरः ।
कुरु निःसंशयं वत्से स्ववृत्ते लोकमित्यशात् ॥
-रघु० १५-७३, ७४, ७५, ७९

तवार्हतो नाभिगमेन तृप्तम् मनो नियोगक्रिययोत्सुकं मे ।
अप्याज्ञया शासितुरात्मना वा प्राप्तोसि संभावयितुं वनान्माम् ॥
-रघु० ५-११

नयविद्भिर्नवे राज्ञि सदसच्चोपदर्शितम् ।
पूर्व एवाभवत् पक्षस्तस्मिन्नाभवदुत्तरः ॥ -रघु० ४-१०

वैखानस— तत्साधुकृतसन्धानं प्रतिसंहर सायकम् ।
आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि ॥

राजा— एष प्रतिसंहृतः । -शाकु० १-१०

सूत— आयुष्मन्, अस्य खलु ते बाणपातवर्तिनः कृष्णसारस्यान्तरे
तपस्विन उपस्थिताः ।

राजा— तेन हि प्रगृह्यन्तां वाजिनः । -शाकु० १, पृ. २०

तपोवननिवासिनामुपरोधो मा भूत् । एतावत्येव रथं स्थापय ।
यावदवतरामि । -शाकु० १, पृ. २४

---

तपोवनानि नाम,' 'पुण्याश्रमदर्शनेन आत्मानं पुनीमहे' इत्यादिवचनं विद्वद्विषयकः महान् आदरः अभिव्यक्तो भवति। 'शकुन्तला विजिनर्मानि मा महर्षये कण्वाय निवेदयिष्यति' इति वचनेन तथा च 'अस्मद्भागधेयम् एतेषां तपस्विनां रक्षणे भवति यत्तनयाजीन् अपि विहाय अभिनन्दयम् विमानारयन्ति (भवन्तु तपस्विन)' इत्यादिभिः दुष्यन्तस्य विशिष्टैः वचनैः तपस्विविषयको भक्तिभावो व्यक्तो भवति। 'अर्थवान्

राजा— सूत, विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नाम।
इदं तावद् गृह्यताम्।
(इति सूतस्याभरणानि धनुश्चोपनीयार्पयति।) –शाकुं० १, पृ. २४

राजा— पुण्याश्रमदर्शनेन तावदात्मानं पुनीमहे। –शाकुं० १, पृ. २३

राजा— सा खलु विदितभक्तिं मां महर्षेः कथयिष्यति –शाकु. १, पृ. ५३

राजा— अहो धिक्। पौरा अस्मदन्वेषिणस्तपोवनमुपरुन्धन्ति।
भवतु। प्रतिगमिष्यामस्तावत्। –शाकु० १, पृ. ५२

राजा— वयमप्याश्रमपीडा यथा न भवति तथा प्रयतिष्यामहे।
–शाकु. १, पृ. ५३

राजा— भद्र सेनापते, आश्रमसन्निकृष्टे स्थिताः स्मः। अतस्ते वचो नाभिनन्दामि। –शाकु० २, पृ. ६५

राजा— मूर्ख, अन्यद्भागधेयमेतेषां रक्षणे निपतति, यद्रत्नराशीनपि विहायाभिनन्द्यम्। –शाकु० २, पृ ७६

उभौ — विदितो भवनाश्रमसदामिहस्थः। तेन भवन्तं प्रार्थयन्ते।

राजा— किमाज्ञापयन्ति। –शाकु० २, पृ ७९

राजा— इतस्तपस्विकार्यम्। इतो गुरुजनाज्ञा।
द्वयमप्यनतिक्रमणीयम्। –शाकु० २, पृ. ८१

यदुत्तिष्ठति वर्णेभ्यः नृपाणां क्षयि तत्फलम्।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः॥ –शाकु० २–१३

---

खलु मे राजशब्द' 'उभाभ्याम् अपि (अदितिमारीचाभ्याम्) दुष्यन्त प्रणमति' इत्यादिवचनैः तपस्विविषयिणी कृतज्ञता विष्कृता भवति। 'बाह्यतः शमप्रधानेषु अन्त गूढ दाहात्मक तेज अस्ति' 'जाने तपसो वीर्यम्' इत्यादिवचनैः क्रियमाणे तपोधनानाम् अभिभवे राज्ञा हृदि निहिता भीतिम् अपि कालिदास सम्यक् आवि-

राजा—(सादरम्) किं काश्यपसन्देशहारिणः ।

कञ्चुकी—अथ किम् ।

राजा—तेन हि मद्वचनाद्विज्ञाप्यतामुपाध्यायः सोमरातः । अमूनाश्रमवासिनः **श्रौतेन विधिना** सत्कृत्य स्वयमेव प्रवेशयितुमर्हतीति । अहमप्यत्र **तपस्विदर्शनोचिते** प्रदेशे स्थितः प्रतिपालयामि ।

—शाकु० ५, पृ. १५६

पुरोहित—(राजानं निर्दिश्य) भो भोस्तपस्विनः असावत्रभवान् वर्णाश्रमाणां रक्षिता **प्रागेव मुक्तासनः वः प्रतिपालयति** ।

—शाकु० ५, पृ. १६२

उभौ—कुतो धर्मक्रियाविघ्नः **सतां रक्षितरि** त्वयि ।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥

राजा—**अर्थवान् खलु मे राजशब्दः** । —शाकुं० ५-१४

ऋषयः—स भवन्तमनामयप्रश्नपूर्वकमिदमाह ।

राजा—**किमाज्ञापयति** भगवान् । —शाकु० ५, पृ. १६५

राजा—(उपगम्य) उभाभ्यामपि वासवानुयोज्यो दुष्यन्तः प्रणमति ।

मारीचः—वत्स, चिरं जीव । पृथिवीं पालय ।

अदिति—वत्स अप्रतिरथो भव । —शाकु० ७, पृ. २५८

राजा- **यथा न मे सैनिकास्तपोवनमुपरुन्धन्ति** तथा निषेद्धव्याः ।
पश्य ।

---

प्करोति । 'राजप्रासादे अपि अहम् (दुष्यन्त) अपि अत्र तपस्विदर्शनोचिते प्रदेशे स्थितः प्रतिपालयामि' 'अयं दुष्यन्त प्रागेव मुक्तासन व प्रतिपालयति' इत्यादिवचनं विद्वद्भि सह क्रियमाण विशिष्ट व्यवहारः सम्यक् प्रदर्शित भवति । नयविद्भि विद्वद्भि. राज्ञे उपदर्शित मार्ग एव उत्तरदायित्वेन आचरणीयं भवति इत्येतत् 'नयविद्भिः नवे राज्ञि' (रघु ४-१०) 'तत्साधुकृतसन्धान गायत्र प्रतिसंहर

**शमप्रधानेषु तपोधनेषु गूढं हि दाहात्मकमस्ति तेजः ।**
स्पर्शानुकूला इव सूर्यकान्ताः तदन्यतेजोऽभिभवाद्वमन्ति ॥ -शाकु० २-७

राजा— ( निःश्वस्य )—

जाने **तपसो वीर्यम्** सा बाला परवतीति मे विदितम् ।
अलमस्मि ततो हृदयम् तथापि नेदं निवर्तयितुम् ॥ -शाकु० ३-२

मा भूदाश्रमपीडेति परिमेयपुरःसरौ ।
अनुभावविशेषात्तु सेनापरिवृताविव ॥ -रघु० १-३७

## विद्वत्कृत-राजसंमाननम्[२२]

**तमृषिः पूजयामास** सकुमारं क्लान्तवाहनम् ।
तपःप्रभावसिद्धाभिर्विशेषप्रतिपत्तिभिः ॥ -रघु० १५-१२

समाजनायोपगतान् स **दिव्यान्मुनीन् पुरस्कृत्य** हतस्य शत्रोः ।
शुश्राव तेभ्यः प्रभवादिवृत्तं स्वविक्रमे गौरवमादधानम् ॥ -रघु० १४-१८

दिग्भ्यो निमन्त्रिताश्चैनमभि**जग्मुर्महर्षयः** ।
न भौमान्येव धिष्ण्यानि हित्वा ज्योतिर्मयान्यपि ॥ -रघु० १५-५९

---

(शाकु १-१०) इत्यादिभिः वर्णनैः तपस्विना विदुषा च इच्छाम् आज्ञारूपेण राजान समानयन्ति इति ज्ञातु शक्यते ।

२२ 'विद्वत्स्कृतराजसंमाननम्' इत्यस्मिन् उपप्रकरणे राज्ञां समाननविषयकाणि वचनानि सङ्गृह्यते । यथा राजाभि विदुषा सभाजने कृते राज्ञा मनसि विद्यमान' विद्वद्विषयक आदर अभिव्यक्त भवति, तथैव विद्वद्भि. राज्ञा समाजने क्रियमाणे विदुषां मनसि अपि न्याय्यमार्गानुसार प्रजाना परिपालनेन सञ्जात आदरविशेष व्यज्यते । प्राकृताः जना षष्ठांशभागस्य कररूपेण दानेन स्वकीय राष्ट्रविषयक कर्तव्यजातं निर्वर्तयन्ति, तपस्विनश्च अक्षय्य तपःषड्भाग ददते इति तु पूर्वस्मिन् एव प्रकरणे सम्यक् वर्णितम् । अत्र तत्तत्प्रसङ्गानुसार तपस्विनः विद्वासः

उभयमेव वदन्ति मनीषिणः समयवर्षितया कृतकर्मणाम् ।
बलनिषूदनमर्थपतिं च तं श्रमनुदं मनुदण्डधरान्वयम् ॥ -रघु० ९-३

तमध्वरे विश्वजिति क्षितीशं निःशेषविश्राणितकोषजातम् ।
उपात्तविद्यो गुरुदक्षिणार्थी कौत्सः प्रपेदे वरतन्तुशिष्यः ॥ -रघु० ५-१

आदिष्टवर्त्मा मुनिभिः स गच्छंस्तपतां वरः ।
विरराज रथप्रष्ठैर्वालखिल्यैरिवांशुमान् -रघु० १५-१०

तस्य संस्तूयमानस्य चरितार्थैस्तपस्विभिः ।
शुशुभे विक्रमोदग्रं व्रीडयाऽवनतं शिरः -रघु० १५-२७

उपायनानि[23]

तस्योपकार्यारचितोपचारा वन्येतरा जानपदोपदाभिः ।
मार्गे निवासा मनुजेन्द्रसूनोर्बभूवुरुद्यानविहारकल्पाः ॥ -रघु० ५-४१

तेन भर्त्रा शिल्पाधिकारे इयं योग्या दारिकेति भगिन्यै उपायनं प्रेषिता । -मालविका अ १, पृ. २२

तेन महासाराणि रत्नवाहनानि शिल्पकारिकाभूयिष्ठं परिजनं चोपायनी-कृत्य भर्तुः सकाशं प्रेषितो दूतः श्वः किल भर्तारं द्रक्ष्यति ।
-मालविका अ ५, पृ. ८९

---

च राजानं साक्षात् सम्पूजयन्ति समानयन्ति च । समाजनसमानलविषयकाणि वच-नानि अत्र सङ्गृहीतानि । एभिः वचनैः तत्तेषां राज्ञां प्रजापरिपालनं स्वकीयम् आचरणं च धर्मात् अनपेतं न्याय्यं च आसीत् इति अनुमातुं शक्यम् ।

२३. 'उपायनानि' इत्यस्मिन् उपप्रकरणे विजितेभ्यः नृपेभ्यः ग्रामीणेभ्यः प्रकृतिभ्यः च सम्प्राप्तानां विविधानाम् उपायनानां वर्णनपराणि वचनानि अत्र सङ्कलितानि । मालविकेषु अत्र उपायनेषु कस्यचित् राज्ञः दारिका अपि उपायन-

कञ्चुकी–– जयतु देवः– अमात्यो विज्ञापयति, तस्मिन् विदर्भराजोपायने द्वे शिल्पदारिके मार्गपरिश्रमाद् अलसशरीरे इति कृत्वा न प्रवेशिते। सम्प्रति देवोपस्थानयोग्ये। तत्राज्ञां देवो दातुमर्हति।

–मालविका अ. ५, पृ. १३९

सत्रान्ते सचिवसखः पुरस्क्रियाभिः गुर्वीभिः शमितपराजयव्यलीकान्।
काकुत्स्थश्चिरविरहोत्सुकावरोधान् राजन्यान् स्वपुरनिवृत्तयेऽनुमेने॥

–रघु० ४–८७

स धातुभेदारुणयाननेमि प्रभुः प्रयाणध्वनिमिश्रतूर्यः।
व्यलङ्घयत् विन्ध्यमुपायनानि पश्यन् पुलिन्दैरुपपादितानि॥

–रघु० १६–३२

तमध्वराय मुक्ताश्वं रक्षःकपिनरेश्वराः।
मेघाः सस्यमिवाम्भोभिरभ्यवर्षन्नुपायनैः॥ –रघु० १५–५८

तेषां सदश्वभूयिष्ठाः तुङ्गा द्रविणराशयः।
उपदा विविशुः शश्वन्नोत्सेकाः कोसलेश्वरम्॥ –रघु० ४–७०

कामरूपेश्वरः तस्य हेमपीठाधिदेवताम्।
रत्नपुष्पोपहारेण छायामानर्च पादयोः॥ –रघु० ४–८४

---

त्वेन सम्प्राप्ता इति वर्णनम् उपलभ्यते। 'मालविकाग्निमित्रे' पञ्चमेऽङ्के स्पष्टम् एव उक्तम् 'तस्मिन् विदर्भराजोपायने द्वे शिल्पदारिके..', 'तेन भर्त्रा शिल्पाधिकारे इय दारिका योग्या इति भगिन्यै उपायनं प्रेषिता', 'तेन महासाराणि रत्नवाहनानि शिल्पाधिकारभूयिष्ठं परिजनं च उपायनीकृत्य...', इत्यादिभिः वचनैः भर्तृदारिकानाम् इतरपरिजनानां च उपायनत्वेन सहेतु वर्ण्यते इति ज्ञातं भवति। साक्षात् युद्धप्रसङ्गे पराजितैः राजभिः विजेत्रे दीयमानं वस्तुजातं यद्यपि उपायनत्वेन कुत्रचित् प्रसङ्गेषु वर्णितम् उपलभ्यते तथापि तत् मद्धोनितेन उपायनपदेन उक्तं न भवति अत तेषां वचनानाम् (युद्धदण्ड) एव समावेशः उचितः।

व्यसनानि[२४]

सोऽधिकारमभिकः कुलोचितं काश्चन स्वयमवर्तयत्समाः ।
संनिवेश्य सचिवेष्वतः परं स्त्रीविधेयनवयौवनोऽभवत् ॥ –रघु० १९-४

इन्द्रियार्थपरिशून्यमक्षमः सोढुमेकमपि स क्षणान्तरम् ।
अन्तरेव विहरन् दिवानिशं न व्यपैक्षत समुत्सुकाः प्रजाः ॥
–रघु० १९-६

न मृगयाभिरतिर्न दुरोदरं न च शशिप्रतिमाभरणं मधु
तमुदयाय नवा नवयौवना प्रियतमा यतमानमपाहरत् ॥ –रघु० ९-७

इति विस्मृतान्यकरणीयमात्मनः सचिवावलम्बितधुरं धराधिपम् ।
परिवृद्धरागमनुबन्धसेवया मृगया जहार चतुरेव कामिनी ॥ –रघु० ९-६९

परिचयं चललक्ष्यनिपातने भयरुषोश्च तदिङ्गितबोधनम् ।
श्रमजयात्प्रगुणां च करोत्यसौ तनुमतोऽनुमतः सचिवैर्ययौ ॥
–रघु० ९-४९

सेनापति— दृष्टदोषाऽपि स्वामिनि मृगया केवलं गुण एव संवृत्ता ।
तथा हि देव:—

अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं
रविकिरणसहिष्णु स्वेदलेशैरभिन्नम् ।

---

२४. व्यसनानि ' इत्यस्मिन् उपशीर्षके स्त्रीमद्यमृगयाद्यूतादीनि व्यसनानि राज्ञां हानिकराणि सद्गृहीतानि । कामिनीषु परम् आसक्तेन राज्ञा स्वकीयं कर्तव्यं निर्वर्तयितुं सर्वथा असमर्थम्, अत एव तदा सचिवेषु एव राज्यभारः सन्निवेशनीयः भवति इति राज्ञः अग्निवर्णस्य वर्णनेन (रघु. १९-४,६) सम्यक् ज्ञातुं शक्यते । कामिनीवत् मृगयाया अपि निरन्तराभ्यासेन एतद्व्यसनासक्त नृप-सचिवावलम्बितधुरः एव भवति इति 'रघुवंशे' नवमे सर्गे दशरथस्य वर्णनेन सम्यक् ज्ञायते (रघु. ९.६९) यद्यपि मृगयायाः वर्णनं सर्वथा हानिकरं व्यसनम् इति मन्यते

अपचितमपि गात्रं व्यायतत्त्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्ति ॥ –शाकु० २–४, पृ. ६३

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।
उत्कर्षः स च धन्विना यदिषवः सिध्यन्ति लक्ष्ये चले
**मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः** कुतः ॥
–शाकु० २–५, पृ. ६४

अहीनगुर्नाम स गां समग्रामहीनबाहुद्रविणः शशास ।
यो हीनसंसर्गपराङ्मुखत्वाद्युवा**प्यनर्थैर्व्यसनैर्विहीनः** ॥ –रघु० १८–१४

भो भोस्तपस्विनः संनिहितास्तपोवनसत्त्वरक्षायै भवत । प्रत्यासन्नः किल
**मृगयाविहारी** पार्थिवो दुष्यन्तः –शाकु० १, पृ ५१

तुरगखुरहतस्तथा हि रेणुर्विटपविषक्तजलार्द्रवल्कलेषु ।
पतति परिणतारुणप्रकाशः **शलभसमूह इवाऽऽश्रमद्रुमेषु** ॥ –शाकु० १–२७

---

तथापि अस्या गुणा अपि कालिदासेन हेतुपुरस्सरं वर्णिता इति 'दृष्टदोषाऽपि स्वामिनि मृगया केवलम् गुण एव संवृत्त' इति सेनापतिवचनेन (शाकुं २ ४), 'मिथ्यैव व्यसनं वदन्ति मृगयाम् (शाकु २ ५) इति उक्तवतः दुष्यन्तस्य, 'चल-लक्ष्यनिपातने परिचयम्', 'मेदश्छेदकृशोदरं वपु उत्थानयोग्यं भवति', 'तनु श्रमजयात् प्रगुणां करोति (रघु. ९ ४९) इत्यादिना दशरथस्य वर्णनेन च व्यसन-रूपिण्याः मृगयाया अपि गुणा उपवर्णिताः । कालिदासस्यापि एतेषां व्यसनविषये शङ्का न आसीत् इति 'रघुवंशे' अष्टादशे सर्गे 'युवाप्यनर्थैर्व्यसनैर्विहीन (रघु. १८.१४) इति वर्णनेन तथा च 'शाकुन्तले' प्रथमेऽङ्के 'तपोवनसत्त्वरक्षायै संनिहिता भवत यत मृगयाविहारी दुष्यन्त प्रत्यासन्न' 'आश्रमद्रुमेषु शलभसमूह इव' इत्यादिवर्णनेन मृगयाविषयक अनादरातिशय व्यज्यते । अत ईदृग्गुणवती अपि मृगया वस्तुत राज्ञां हानिकरा एव इति कालिदासस्य अभिमतम् इति ज्ञातुं शक्यते ।

## धर्मासनम्[२५] (अधिकारण—व्यवहारः)

मोः कामं धर्मकार्यम् अनतिपात्यं देवस्य । तथापि इदानीम् एव धर्मासनाद् उत्थिताय पुनरुपरोधकारि कण्वशिष्यागमनम् अस्मै नोत्सहे निवेदितुम् । अथवा अविश्रमोऽयं लोकतन्त्राधिकारः । -शाकुं० ५ पृ० १५४

नियमयसि कुमार्गप्रस्थितानात्तदण्डः प्रशमयसि विवादं कल्पसे रक्षणाय ।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥
-शाकुं० ५-८

पुरुषः— .... इदं रत्नभासुरम् अङ्गुलीयं दृष्ट्वा पश्चाद् अहं तस्य विक्रयाय दर्शयन् गृहीतो भावमिश्रैः । मारयत वा मुञ्चत वा ।....

श्यालः— जानुक, अङ्गुलीयकदर्शनम् अस्य विमर्शयितव्यम् । राजकुलमेव गच्छामः ।....

श्यालः—सूचक, इमं गोपुरद्वारे अप्रमत्तौ प्रतिपालयतम्, यावद् इदम् अङ्गुलीयकं यथागमनं भर्तुः निवेद्य ततः शासनं प्रतीक्ष्य निष्क्रामामि । ....

प्रथमः— जानुक । प्रस्फुरतो मम हस्तौ अस्य वधार्थं सुमनसः पिनद्धुम् । ....

द्वितीयः— ( विलोक्य ) एष नौ स्वामी पत्रहस्तः राजशासनं प्रतीक्ष्य इतोमुखो दृश्यते । गृध्रबलिर्भविष्यसि, शुनो मुखं वा द्रक्ष्यसि ।

---

२५. 'धर्मासनम्' इत्यस्मिन् उपप्रकरणे 'न्याय–दान' विषयकाणि सर्वाणि वचनानि सङ्गृह्यन्ते । 'व्यवहारासनम्' इति शब्देनापि एतद्विषयकमेव कार्यं बोध्यते (रघु० ८-१८)। 'सभा' शब्दस्य न्यायदानस्य स्थानं निर्दिशति ( रघु० १५-२९; १७-२७, २९) ।

अधिकारविमूढानां प्रजानां कार्याणि अवेक्षितुं नृपतिः प्रतिदिनं नियमेन धर्मासनम् अधिरोहति, तत्र प्रधानम् आह्निकं कार्यं मनुते; इति शाकुन्तले अमात्यपिशुनेन सह राज्ञः दुष्यन्तस्य व्यवहारेण ज्ञायते– 'विमर्शायात्र संमा–

श्यालः——सूचक। मुच्यताम् एष जालोपजीवी। **उपपन्नः खलु अङ्गुलीयस्य आगमः।**

द्वितीयः——एषः यमसदनं प्रविश्य प्रतिनिवृत्तः। —शाकु० ६, पृ १८४-१८६

राजा——वेत्रवति, मद्वचनादमात्यमार्यपिशुनं ब्रूहि। चिरप्रबोधान्न सम्भावितम् अस्माभिरद्य **धर्मासनमध्यासितुम्**। यत्प्रत्यवेक्षितं **पौरकार्यमार्येण** तत्पत्रम् आरोप्य दीयतामिति। —शाकु० ६, पृ. १९८

राजा——(अनुवाच्य) कथम्। समुद्रव्यवहारी सार्थवाहो धनमित्रो नाम नौव्यसने विपन्नः। अनपत्यश्च किल तपस्वी। **राजगामी किल तस्यार्थसञ्चय इत्येतदमात्येन लिखितम्।** कष्टं खल्वनपत्यता। बहुधनत्वात् बहुपत्नीकेन तत्रभवता भवितव्यम्। विचार्यतां यदि काचिदापन्नसत्वा तस्य भार्यासु स्यात्। —शाकु० ६, पृ. २१९

प्रतीहारी——देव, अमात्यो विज्ञापयति, अर्थजातस्य गणनाबहुलतयैकमेव **पौरकार्यमेवक्षितं, तद्देवः पत्रारूढं प्रत्यक्षीकरोत्विति।** —शाकु० ६, पृ. २१९

परिव्राजिका——**निर्णयाधिकारे** ब्रवीमि। —मालविका० अ १, पृ. २२

---

वितमस्माभिरद्य धर्मासनमध्यासितुम्' (शा० ६, पृ. १९८) इति। राजा स्वयमेव न्यायदानस्य कार्यं यद्यपि करोति, तथापि अस्मिन् कर्मणि नीतिविद्भिः विपश्चिद्भिः सभासद्भिः सह तस्य विमर्शः अवश्यम् आसीत् इति 'सभामध्ये सभासद्भिः सह उपस्थितं रामम्' (रघु० १५-३९), 'धर्मस्था सखाय यस्य रं (धर्मस्यसख.) सारथिः.' (रघु० १७-३९.) इत्यादिवचनं ज्ञायते। अमात्यपिशुनस्य विषये तु राज्ञा स्पष्टमेवोक्तम् 'यत् प्रत्यवेक्षित पौरकार्यम् आर्येण तत्पत्रम् आरोप्य दीयताम् इति' (शा० ६, पृ. १९८)। अत एवोक्तम् 'व्यवहारान्नृप पश्येत् विद्वद्भि ब्राह्मणै सह' इति। राजा अविप्रत्यर्थिविषये प्रहीष्यमाणनिर्णयान् प्राक् एव विद्वद्भि सचिवैश्च समास्थं स्वकीय मत राज्ञे निवेदनीयम् इत्यादि उपरितनेभ्य वचनेभ्य. ज्ञायते। अङ्गुलीयकवृत्तान्तात् राजशासनविषये निर्णयविषये च अनुजीविनामिव प्राड्विवाको जानपदानामपि दृढ विश्वासः आसीत् इति स्पष्टं ज्ञायते। एतदर्थम्

नृपतिः प्रकृतीरवेक्षितुं व्यवहारासनमाददे युवा।
परिचेतुमुपांशु धारणां कुशपूतं प्रवयास्तु विष्टरम् ॥ –रघु० ८-१८

स ददर्श सभामध्ये सभासद्भिरुपस्थितम्।
रामं सीतापरित्यागादसामान्यपतिं भुव.॥ –रघु० १५-३९

स धर्मस्थसखः शश्वदर्थिप्रत्यर्थिनां स्वयम्।
ददर्श संशयच्छेद्यान् व्यवहारानतन्द्रित.॥ –रघु० १७-३९

आदर्शराजकल्पना[२६]

रात्रिन्दिवविभागेषु यदादिष्टं महीक्षिताम्।
तत्सिषेवे नियोगेन स विकल्पपराङ्मुख ॥ –रघु० १७-४९

सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम्।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ॥
यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम्।
यथापराधदण्डानां यथाकालप्रबोधिनाम् ॥

एव 'राज्ञा सभासद कार्या रिपौ मित्रे च ये समा' इति सभासदां राज्ञश्च अर्थिप्रत्यर्थिविषये सर्वात्मना निरपेक्षबुद्धित्वम्, धर्मानुसारित्वं च आवश्यकम् इति 'धर्मस्थसख' (रघु० १७-३९) इत्यनेन बोध्यते।

२६ 'आदर्शराजकल्पना' इति अस्मिन् उपप्रकरणे कालिदासस्य आदर्शभूत नृप कीदृग्गुणोपेत इति रघुणा वंशवर्णनावसरे, तदनन्तर दिलीपस्य वर्णनावसरे प्रस्तुतेभ्य श्लोकेभ्य ज्ञातु शक्यते। 'रघुवंशे' सप्तदशे सर्गे अतिथे वर्णनावसरे कालिदासेन उपवर्णितम्, यत् अतिथि विकल्पपराङ्मुखः सन् महीक्षिता रात्रिदिवविभागेषु यदुपदिष्ट तत् नियोगेन सिषेवे।' अत्र नियोगशब्दस्य राज्यशास्त्रे पारिभाषिक निश्चय इति अर्थ। तथा च कौटिल्य. आह– 'कार्याणां नियोगविकल्पसमुच्चयाः भवन्ति। अनेन एव उपायेन कार्यं भवेत्, अन्येन कार्यं न

त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम् ।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥
शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥
रघूणामन्वयं वक्ष्ये.... –रघु० १–५, ६, ७, ८, ९

भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम् ।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः ॥
रेखामात्रमपि क्षुण्णादा मनोर्वर्त्मनः परम् ।
न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः ॥
प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत् ।
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥
सेना परिच्छदस्तस्य द्वयमेवार्थसाधनम् ।
शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्वी धनुषि चातता ॥
तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च ।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥

---

भवेत् इति निश्चय नियोग; अनेन वा अन्येन वा उपायेन कार्यं भवेत् इति विकल्प; अनेन अन्येन च कार्यं भवेत् इति समुच्चय '। अत्र नियोगविकल्पसमुच्चयेषु राजा 'नियोगपरेण' एव भाव्यम् इति कालिदासस्य स्पष्टम् अभिमतम् इति ज्ञायते। 'सोऽहमाजन्मशुद्धानाम्' इत्यादिभि चतुर्भि श्लोकैः कालिदासेन सामान्यतः सर्वेषाम् एव रघूणा वर्णनं कृतम्, तथापि तत् कालिदासस्य आदर्शभूतनृपकल्पना-विषयकम् इति तु स्पष्ट वर्तते। यत कालिदासेन एव वर्णिता सर्वे अपि रघुवंशीयाः राजान एतद्वर्णनकोटौ अन्त.पातिनः न भवन्ति, इति स्वयम् एव वर्णितम्। राज्ञः अग्निवर्णस्य विषये अन्यतमम् एकम् अपि लक्षण स्प्रष्टु न प्रभवेत्। अत. रघूणा वंशवर्णने स्वस्य प्रवृत्ति विमर्षम् इति निवेदयितुकामेन कालिदासेन स्वकीया आदर्शभूतनृपविषयिणी कल्पना अत्यन्त सामीचीन्येन सदर्शिता। 'भीमकान्तै नृपगुणै.' इत्यादिना दिलीपस्य विशिष्य वर्णनावसरे अपि सामान्यत दशभि श्लोकै आदर्शनृपविषयिणी कल्पना एव सदर्शिता। तत्र " मृदुश्चेदवमन्येत तीक्ष्णादुद्विजेत

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत् ॥
ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः ।
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥
अनाकृष्टस्य विषयैर्विद्यानां पारदृश्वनः ।
तस्य धर्मरतेरासीद्वृद्धत्वं जरसा विना ॥
प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेतवः ॥
स्थित्यै दण्डयतो दण्ड्यान्परिणेतुः प्रसूतये ।
अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ॥ -रघु० १-१६...२५



द्वेष्योऽपि संमतः शिष्टस्तस्यार्तस्य यथौषधम् ।
त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता ॥ -रघु० १-२८

पित्रा दत्तां रुदन् रामः प्राङ्महीं प्रत्यपद्यत ।
पश्चाद्वनाय गच्छेति तदाज्ञां मुदितोऽग्रहीत् ॥ -रघु० १२-७

पितुर्नियोगाद्वनवासमेवं निस्तीर्य रामः प्रतिपन्नराज्यः ।
धर्मार्थकामेषु समां प्रपेदे यथा तथैवावरजेषु वृत्तिम् ॥ -रघु० १४-२१

---

जन । तीक्ष्णश्चैव मृदुश्चैव प्रजाना स च समतः ॥'' इति राजनीत्यनुसारम् अधृष्यत्वम्, अभिगम्यत्व च नृपस्य अपेक्ष्यते इति यथा कालिदासेन उक्तम्, तथैव 'प्रजानाम् एव भूत्यर्थं दिलीप ताभ्य बलिम् अग्रहीत्' इति स वर्णयामास । तथैव च 'मन्त्रमूल यतो राज्यम् अतो मन्त्र सुरक्षितम् । कुर्याद्यथा तन्नविदु कर्मणाम् आफलोदयात्' इति राजनीते अनुवादार्थमेव 'तस्य सवृतमन्त्रस्य' इत्यादि वर्णन चकार ।

'अनातुर सन् धर्मं भेजे' ( रघु १-२१ ), 'धर्मरते तस्य जरया विना वृद्धत्वम् आसीत्' ( रघु १-२३ ), 'मनीषिण तस्य अर्थकामौ धर्मं एव आस्ताम्' ( रघु १-२५ ) इत्यादिना कालिदासस्य धर्मराज्यकल्पना एव अर्थ-प्रधानराज्यकल्पनापेक्षया अभिमततरा आसीत् इति ज्ञातु शक्यते । 'धर्मार्थकामेषु

आलोकान्तात्प्रतिहततमोवृत्तिरासां प्रजानाम्
तुल्योद्योगस्तव दिनकृतश्चाधिकारो मतो नः।
तिष्ठत्येष क्षणमधिपतिर्ज्योतिषां व्योममध्ये
षष्ठे भागे त्वमपि दिवसस्यात्मनश्छन्दवर्ती ॥ –विक्रमोर्वशीयम् २–१

नियमयसि कुमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम
**त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम्॥** –शाकु० ५–८

---

समा वृत्ति प्रपेदे' ( रघु १४–२१ ) इत्यनेन धर्मस्य अर्थकामाभ्या सह एव अवस्थिति इति यद्यपि वर्णन कृतम् तथापि सति प्रसङ्गे अर्थकामयो विरोधे सम्भूते धर्मस्य एव प्राधान्यम् इति 'धर्मोत्तर मध्यममाश्रयन्ते' (रघु० १३–२२) 'अर्थकामसहित देहबद्ध धर्मम् इव' ( रघु ११–३५ ), 'धर्मं एव तस्य अर्थ-कामौ आस्ताम्' ( रघु १–२५ ), एभि धर्मस्यैव त्रिषु पुरुषार्थेषु बलीयस्त्व सम्यक् प्रदर्शितम्। 'विक्रमोर्वशीये' द्वितीये अङ्के सूर्येण सह कृता राज्ञ तुलना पुरुषार्थेषु धर्मस्य एव प्राधान्य बोधयति।

# २ सचिवः

## सचिव-कर्तव्यम्[1]

सन्तानार्थाय विधये स्वभुजादवतारिता ।
तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे ॥ —रघु० १-३४

सोऽधिकारमभिकः कुलोचितं काश्चनस्वयमवर्तयत्समाः ।
संनिवेश्य सचिवेष्वतःपरं स्त्रीविधेयनवयौवनोऽभवत् ॥ —रघु० १९-४

---

राजनीतौ राज्ञ स्थानादनन्तर सचिवस्य एव स्थान सर्वत्र निरूपितम् । राज्यस्य सप्ताङ्गाना वर्णनावसरे अपि 'स्वाम्यमात्यसुहृत्कोश'इत्यत्र द्वितीय स्थान सचिवस्य एव । अत अत्रापि द्वितीय प्रकरण सचिवस्य उपनिबद्धम्।

राजनीतौ राजा यद्यपि सर्वात्मना प्रभविष्णु:, तथापि क्वचित्प्रसङ्गेषु सोऽपि सचिवानुमतिं विना किमपि कर्तुं न पारयति, इति कालिदासीयवाङ्मये उद्धृतैः कैश्चन वचनैः ज्ञातु शक्यते ।

यद्यपि कालिदासीयवाङ्मये नृपस्य 'ना विष्णु पृथिवीपति ' इत्यादिकल्पनानुसार सर्वत्र दैव्या कल्पनाया एव वर्णनम्, तथापि प्रसङ्गविशेषेषु राज्ञां 'सचिवायत्तसिद्धि'त्वमिव आविर्भूतम् । यथा मृगयादिगमनार्थं दशरथेन सचिवानाम् अनुमति लब्धा ( रघु० ९-४९ ), अत स दशरथ 'सचिवालम्बितधुर ' ( रघु० ९-६९ ) एव मृगयार्थं जगाम इति वर्णितम्, तथैव विश्वजिन्नामकयज्ञस्य आहर्ता सम्राट् रघुः अपि 'सचिवसख ' ( रघु० ४-८७ ) एव स्वकार्यं निर्वर्तयामास इत्यादिना सचिवानां कालिदासकालेऽपि असाधारण वैशिष्ट्य बोध्यते । एतदेव च अत्र प्रकरणे उपनिबद्धैः वचनैः ज्ञाप्यते ।

१ 'सचिवकर्तव्यम्' इत्यस्मिन् उपप्रकरणे राज्ञाम् अनुपस्थितिकाले राज्यकार्यं सचिवैः निर्वर्त्यते स्म इति एतत् प्रदर्शकानि 'तेन ( दिलीपेन ) स्वभुजात् अवतारिता जगत धू सचिवेषु निचिक्षिपे ( रघु० १-३४ )', 'सः ( अग्निवर्ण ) सचिवेषु अधिकार संनिवेश्य अतः पर कामिनीमसक्तनेताः रेमे ( रघु० १९-४ )', 'दशरथमपि विस्मृतान्यकरणीयं सचिवान् अभिवद्धम् एव

इति विस्मृतान्यकरणीयमात्मनः सचिवावलम्बितधुरं धराधिपम् ।
परिवृद्धरागमनुबन्धसेवया मृगया जहार चतुरेव कामिनी ॥ -रघु० ९-६९

परिचयं चललक्ष्यनिपातने भयरुषोश्च तदिङ्गितबोधनम् ।
श्रमजयात्प्रगुणां च करोत्यसौ तनुमतोऽनुमतः सचिवैर्ययौ ॥-रघु० ९-४९

बाढमेष दिवसेषु पार्थिवः कर्म साधयति पुत्रजन्मने ।
इत्यदर्शितरुजोऽस्य मन्त्रिणः शश्वदूचुरघशङ्किनीः प्रजाः ॥
तं गृहोपवन एव सङ्गताः पश्चिमक्रतुविदा पुरोधसा ।
रोगशान्तिमपदिश्य मन्त्रिणः सम्भृते शिखिनि गूढमादधुः ॥
तैः कृतप्रकृतिमुख्यसङ्ग्रहैराशु तस्य सहधर्मचारिणी ।
साधु दृष्टशुभगर्भलक्षणा प्रत्यपद्यत नराधिपश्रियम् ॥
तं भावार्थं प्रसवसमयाकाङ्क्षिणीनां प्रजानाम्
अन्तर्गूढं क्षितिरिव नभोबीजमुष्टिं दधाना ।
मौलैः सार्धं स्थविरसचिवैर्हेमसिंहासनस्था
राज्ञी राज्यं विधिवदशिषद्भर्तुरव्याहताज्ञा ॥ -रघु० १९, ५२-५७

---

मृगया जहार ' ( रघु० ९-६९ )' इत्यादीनि वचनानि स्पष्टं प्रतिपादयन्ति । किन्तु राजनि अग्निवर्णे अनपत्ये मृते सत्यपि प्रकृतिमुख्यानाम् अनुमत्या सचिवा गर्भवतीम् राज्ञी हेमसिंहासने प्रतिष्ठाप्य तद्द्वारैव सर्वराज्यव्यवहारं निर्वर्तयामासुः इत्यपि भारतीयराजनीतौ एकं नवीनमेव कार्यं मन्त्रिभिः निर्वर्तितम् इत्येतत् एकोनविंशतितमे सर्गे उध्दृतेभ्यः वचनेभ्यः ( रघु० १९-५२,५४,५५,५७ ) ज्ञातुं शक्यते ।

प्रायः सर्वत्र सचिववर्णनावसरे बहुवचननिर्देशात्- ( रघु० १-३४,१९-४, ९-४९,१९-५२, इ इ ) सचिवा बहुसङ्ख्याकाः, ते च स्वातन्त्र्येण राज्ञा सह स्वस्वविषयम् उद्दिश्य मन्त्रविमर्शादिकं कुर्वन्ति स्म इति ज्ञायते । कालिदासेन प्रधान-मन्त्रिकल्पना कुत्र अपि न आविष्कृता, यस्य प्रधानमन्त्रिणः आज्ञां सर्वे अपि स्वस्वविषयाधिकारिणः मन्त्रिणः अनुमन्यन्ते । प्रत्युत, राजा एव स्वयं साक्षात् तान् मन्त्रिणः आदिशति, न प्रधानमन्त्रिद्वारा, इति अनुमातुं शक्यते ।

**नयविद्भिर्नवे** राज्ञि सदसच्चोपदर्शितम् ।
पूर्व एवाभवत्पक्षस्तस्मिन्नाभवदुत्तरः ॥ -रघु० ४-१०

श्मश्रुप्रवृद्धजनितानननविक्रियांश्च प्लक्षान् प्ररोहजटिलानिव **मन्त्रिवृद्धान्** ।
अन्वग्रहीत् प्रणमतः शुभदृष्टिपातैः वार्तानुयोगमधुराक्षरया च वाचा ।
-रघु० १३-७१

सत्रान्ते **सचिवसखः** पुरस्क्रियाभिः गुर्वीभिः शमितपराजयव्यलीकान् ।
काकुत्स्थश्चिरविरहोत्सुकावरोधान् राजन्यान् स्वपुरनिवृत्तयेऽनुमेने ॥
-रघु० ४-८७

प्रतीहारी :—देव, **अमात्यो** विज्ञापयति । अर्थजातस्य गणनाबहुलतया एकमेव पौरकार्यमवेक्षितम्, तद्देवः पत्रारूढं प्रत्यक्षीकरोत्विति ।
-शाकु० ६, पृ. २१९

राजा :—वेत्रवति, मद्वचनात् **अमात्यमार्यपिशुनं** ब्रूहि । चिरप्रबोधान्न सम्भावितमस्माभिरद्य धर्मासनमध्यासितुम् । यत् प्रत्यवेक्षितं पौरकार्यम् आर्येण तत्पत्रमारोप्य दीयतामिति । -शाकु० ६, पृ. १९८

राजा :—वयस्य अनतिक्रमणीया दिवस्पतेराज्ञा । तदत्र परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि—

---

धर्मासिंहासनस्थ राजा आधिकरणिक व्यवहार तदधिकृतामात्यादिद्वारा एव पश्यति इति शाकुन्तले षष्ठे अङ्के समागतेन वर्णनेन ज्ञायते । यथा-'वेत्रवति, मद्वचनात् आर्यपिशुन ब्रूहि, चिरप्रबोधात् अद्य धर्मासनमध्यासितु न पारितम्, तत् यत्पौरकार्यम् अमात्येन (व्यवहाराधिकृतेन) अवेक्षितम् तत सर्वमपि पत्रे विलिख्य दीयताम् इति । (शाकु० ६, पृ, १९८) ।' अत्र अमात्यस्य उत्तर प्रतिहारी निवेदयति-'देव, अमात्यः विज्ञापयति, अर्थव्यवहारस्य गणनाबाहुल्यात् एकमेव पौरकार्यम् अवेक्षितम्, तत् पत्रारूढ, देव प्रत्यक्षीकरोतु (शाकु० ६, पृ २१९)' इ ।

'केवला स्वन्मति प्रजा परिपाल्यतु' इति अमात्यपिशुन दुष्यन्तस्य प्रतिसन्देश अमात्यानां प्रजापरिपालनविषये असाधारण सामर्थ्यं कौशलं च प्रकटयति ।

स्वन्मतिः केवला तावत्परिपालयतु प्रजाः ।
अधिज्यमिदमन्यस्मिन् कर्मणि व्यावृतं धनुः ॥ -शाकु० ६, पृ २२८

गौरवाद्यदपि जातु मन्त्रिणां दर्शनं प्रकृतिकाङ्क्षितं ददौ ,
तद्गवाक्षविवरावलम्बिना केवलेन चरणेन कल्पितम् ॥ -रघु० १९-७

## दूत-प्रणिधयः[२]

प्रत्यभिज्ञानरत्नं च रामायादर्शयत्कृती ।
हृदयं स्वयमायातं वैदेह्या इव मूर्तिमत् ॥ -रघु० १२-६४

**प्रवृत्तावुपलब्धायां** तस्याः सम्पातिदर्शनात् ।
**मारुतिः सागरं तीर्णः** ससारमिव निर्ममः ॥ -रघु० १२-६०

**निर्बन्धपृष्टः स जगाद** सर्वं स्तुवन्ति पौराश्चरितं त्वदीयम् ।
अन्यत्र रक्षोभवनोषितायाः परिग्रहान्मानवदेव देव्याः ॥ -रघु० १४-३२

स किंवदन्तीं वदतां पुरोगः स्ववृत्तमुद्दिश्य विशुद्धवृत्तः ।
सर्पाधिराजोरुभुजोऽ**पसर्पं** पप्रच्छ भद्रं विजितारिभद्रः ॥ -रघु० १४-३१

---

रघुसदृशाणां सर्वात्मना असाधारणकर्तृत्वशालिनामपि राज्ञां कार्यविषये अन्तिमः निर्णयः तावत् नयविदाम् अमात्यानां मन्त्रानुसारम् एव आसीत् इति 'नयविद्भिः' ( रघु० ४-१० ) इत्यादिना स्पष्टं प्रदर्शितम् ।

२ '**प्रणिधयः**' इत्यस्मिन् उपप्रकरणे 'चारचक्षुषो राजानः' इति इमाम् उक्तिम् अनुसृत्य प्राय चाराणां वर्णनपराणि वचनानि अत्र सङ्गृह्यन्ते । चाराणां कार्यं यथा अरिमण्डले प्रविश्य ततः सर्वा वृत्तान्तकथा ज्ञातव्या इति, तथा एव स्वकीये राज्यविभागे पौरेषु सञ्चार्य सर्वं प्रवृत्तिजातं ज्ञातव्यं भवति इत्येतत्- 'परेषु च स्वेषु च' प्रेषितैः परस्परम् अजानद्भिः अपसर्पैः स ( अतिथि ) स्वपन् अपि जजागार ( रघु० १७-५१ ), 'स किंवदन्ती- ( १४ ३१-३२ )' इत्यादिभि वर्णनैः सम्यक् ज्ञायते । तथा च कामन्दक —

परेषु च स्वेषु क्षिप्तैरविज्ञातपरस्परैः ।
सोऽपसर्पैर्जजागार यथाकालं स्वपन्नपि ॥ -रघु० १७-५१

न तस्य मण्डले राज्ञो न्यस्तप्रणिधिदीधितेः ।
अदृष्टमभवत्किञ्चिद् व्यभ्रस्येव विवस्वतः ॥ -रघु० १७-४८

अवैमि ते सारमतः खलु त्वां कार्ये गुरुण्यात्मसमं नियोक्ष्ये
व्यादिश्यते भूधरतामवेक्ष्य कृष्णेन देहोद्वहनाय शेषः ॥ -कुमार० ३-१३

मदनः— तथापि तावत्कस्मिंश्चिदाज्ञां मे दातुमर्हथ ।
विनियोगप्रसादा हि किङ्कराः प्रभविष्णुषु ॥
-कुमार० ६-६२

सर्वं सखे त्वय्युपपन्नमेतद् उभे ममास्त्रे कुलिशं भवांश्च
वज्रं तपोवीर्यमहत्सु कुण्ठं त्वं सर्वतोगामि च साधकं च ॥
-कुमार० ३-१२

तस्यानुमेने भगवान् विमन्युर्व्यापारमात्मन्यपि सायकानाम् ।
कालप्रयुक्ता खलु कार्यविद्भिर्विज्ञापना भर्तृषु सिद्धिमेति ॥
-कुमार० ७-९३

---

'चारान्विचारयेत् तीर्थेष्वात्मनश्च परस्य च ।
पाषण्डयादीनविज्ञातानन्योन्यमितरैरपि ।'

शाकुन्तले षष्ठे अङ्के 'विनोदार्थं प्रमदवनभूमिं जिगमिषो दुष्यन्तस्य गमनात् प्राक् प्रमदवनस्थानस्य चारद्वारा प्रत्यवेक्षणं' ( शाकु० ६.पृ १९८ ), तथा च रघुवंशे 'नदीषु विहर्तुकामस्य राज्ञ नद्यवतरणात् प्राक् आप्तायिभिः नक्रादीनां महामत्स्यानामपकर्षणम्' ( रघु० १६-५५ ) इत्यादिना चाराणाम् अन्यदपि विशिष्ट कार्यं ज्ञायते। तथा च कामन्दके —

'परितापितेषु वासरेषु पश्यन् तटलेखास्थितम् आप्तसैन्यचक्रम् ।
सुविशोधितमीनचक्रजालं व्यवगाहेत जलं सुहृत्समेतः ॥' इति ।

कञ्चुकी—– ( उपगम्य ) जयतु जयतु देवः । महाराज, प्रत्यवेक्षिताः
प्रमदवनभूमयः । यथाकाममध्यास्तां विनोदस्थानानि महाराजः ।
–शाकु० ६, पृ. १९८

तस्मिन्मघोनस्त्रिदशान्विहाय सहस्रमक्ष्णां युगपत्पपात ।
प्रयोजनापेक्षितया प्रभूणां प्रायश्चलं गौरवमाश्रितेषु ॥ –कुमार० ३-१

राजा— सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
सम्भावनागुणमवेहि तमीश्वराणाम्
किं वाऽभविष्यदरुणस्तमसां विभेत्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ –शाकु० ७–४

## पुरोहितः[3]

अथोपनीतं विधिवद्विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम् ।
अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रिया हि वस्तूपहिता प्रसीदति ॥ –रघु० ३-२९

---

यत्र च राज्ञाम् असाधारणवीर्यातिशयशालि शस्त्रं कुण्ठितं भवति, तत्र चारैः कार्यं ससाधयितुं शक्यते, इत्येतत्– 'वज्रं तपोवीर्यमहत्सु कुण्ठं त्वं सर्वतोगामि च साधकं च' ( कु० ३–१२ ) इत्यनेन कल्पयितुं शक्यते ।

दूतानां विशिष्टसन्देशहारित्वं प्रवृत्तोपलब्धित्वं च हनूमतः सञ्चारात् सीतायाः उपलब्धेश्च ज्ञातुं शक्यते–( रघु० १२–६०,६४ ).

'किङ्कराः प्रभविष्णुषु विनियोगप्रसादाः ( कु. ६–६२ )' 'नियोज्या — भृत्या -महत्सु अपि कर्मसु सिध्यन्ति, तत्र प्रभूणां सम्भावनागुणं योजनाचातुर्यम् एव प्रधानं कारणम् इति अवेहि ( शाकु ७–४ )' इत्यादिना चारयोजनाविषये प्रभूणां चातुर्यम् एव प्रधानम् इति ज्ञायते ।

३ 'पुरोहितः' इत्यस्मिन् उपप्रकरणे सचिववत् पुरोहितस्यापि राज्यविषयकं विशिष्टं कार्यं वर्तते, अतः सचिवेषु अन्यतमः एव पुरोहितः इत्येतत्–प्रदर्शकानि वचनानि अत्र सङ्गृहीतानि । यथा पुरोहितानां कार्यं राजपुत्राणां अध्यापनादि

तस्मान्मुच्ये यथा तात संविधातुं तथार्हसि ।
इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ॥ -रघु० १-७१

पुष्पायुपजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥ -रघु० १-६३

तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी ।
तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः ॥ -रघु० १-५७

अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः ।
अर्घ्यामर्घ्यपतिर्वाचमाददे वदतां वरः ॥ -रघु० १-५९

उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणां च प्रतिहर्ता त्वमापदाम् ॥ -रघु० १-६०

तव मन्त्रकृतो मन्त्रैर्दूरात्प्रशमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥ -रघु० १-६१

स बभूव दुरासदः परैर्गुरुणाऽथर्वविदा कृतक्रियः ।
पवनाग्निसमागमो ह्ययं सहितं ब्रह्म यदस्त्रतेजसा ॥ -रघु० ८-४

असमाप्तविधिर्यतो मुनिस्तव विद्वानपि तापकारणम् ।
न भवन्तमुपस्थितः स्वयं प्रकृतौ स्थापयितुं पथश्च्युतम् ॥ -रघु० ८-७६

---

भाषीत् इत्यादि ( रघु० १-२९ ) ज्ञायते । यथा च धार्मिकं कार्यम् 'मदीयाः प्रजाः पुष्पायुपजीविन्यः, निरातङ्काः, निरीतयश्च इति यत्, तत्र तव ब्रह्मवर्चसं हेतुः ( रघु० १-६३ ),' 'मन्त्रद्वारा अरिनाशादिकं कार्यमपि यथा ( रघु० १-६१ ) निर्वर्तते तथैव साक्षात् राजपुरुषाकार अपि पुरोहितं ऊचाते स्म इति स ( गुरुः ) मान्त्रानुकूले अहनि कृताख्याती सोऽभिषिच्यमानोऽस्य यथोक्तो प्रशस्ते, इत्यादि वचनैः स्पष्टं ज्ञायते । अत्र च कामन्दकः स्पष्टं प्रतिपादयति—' त्रय्यां च दण्डनीत्यां च कुशलः स्यात् पुरोहितः । अथर्वविहितं कुर्यात् नित्यं शान्तिकपौष्टिकम् ॥ इति । प्राक् सर्वाणि पुरोहितकर्माण्यथर्वे पुरोहिता अथर्व-वेदज्ञा इति तैस्तैः विशेषणैः ज्ञायते । यथा 'अथर्वनिधे ( रघु० १-५९ ),' 'अथर्वविदा गुरुणा ( रघु० ८-४ ) 'इत्यादि ।

अथ तं सवनाय दीक्षितः प्रणिधानाद्गुरुराश्रमस्थितः ।
अभिषङ्गजडं विजिज्ञवानिति शिष्येण किलान्वबोधयत् ॥ –रघु० ८–७५

प्राहिणोच्च महितं महाद्युतिः कोसलाधिपतये पुरोधसम् ।
भृत्यभावि दुहितुः परिग्रहाद्दिश्यतां कुलमिदं निमेरिति ॥ –रघु० ११–४९

असौ पुरस्कृत्य गुरुं पदातिः पश्चादवस्थापितवाहिनीकः ।
वृद्धैरमात्यैः सह चीरवासा मामर्घ्यपाणिर्भरतोऽभ्युपैति ॥ –रघु० १३–६६

सखा दशरथस्यापि जनकस्य च मन्त्रकृत् ।
सञ्चस्कारोभयप्रीत्या मैथिलेयौ यथाविधि ॥ –रघु० १५–३१

अथ साधरजो रामः प्राचेतसमुपेयिवान् ।
ऊरीकृत्यात्मनो देहं राज्यमस्मै न्यवेदयत् ॥ –रघु० १५–७०

कुशावतीं श्रोत्रियसात्स कृत्वा यात्रानुकूलेऽहनि सावरोधः ।
अनुद्रुतो वायुरिवाभ्रवृन्दैः सैन्यैरयोध्याभिमुखः प्रतस्थे ॥ –रघु० १६–२५

मन्त्रविमर्शः[४]

अजिताधिगमाय मन्त्रिभिः युयुजे नीतिविशारदैरजः ।
अनपायिपदोपलब्धये रघुराप्तैः समियाय योगिभिः ॥ –रघु० ८–१७

---

' दशरथस्य सखा जनकस्य मन्त्रकृच्च ( विश्वामित्र )–( रघु० १५–३१ ),' इत्यत्रत्यसखिपदेन पुरोहितानां राज्यकार्यविषये विशिष्ट सामर्थ्यं ज्ञायते । अत एव च, न केवल दैवीना, अपि तु मानुषीणाम् अपि आपदा त्व प्रतिहर्ता ( रघु० १–६० ) ' इति वर्णितम् । ' नाक्षत्र ब्रह्म भवति क्षत्र ना ब्रह्म वर्धते ' इति पूर्वोक्त सिद्धान्त एव पुरोहितसामर्थ्यवर्णनावसरे ' अस्त्रतेजसा सहित ब्रह्म नाम पवनाग्निसमागम (रघु० ८–४.) ' इत्यनेन स्पष्ट प्रतिपादित ।

४ मन्त्रविमर्श— अमात्यै., सचिवै सह क्रियमाण नृपाणा मन्त्रविमर्शः अत्र विचार्यंते । ' नास्यच्छिद्र परो विद्यात्, विद्यात् छिद्र परस्य तु ।' इति मनूक्तिम्

मन्त्रः प्रतिदिनं तस्य बभूव सह मन्त्रिभिः।
स जातु सेव्यमानोऽपि गुप्तद्वारो न सूच्यते ॥ -रघु० १७-५०

भव्यमुख्याः समारम्भाः प्रत्यवेक्ष्या निरत्ययाः।
गर्भशालिसधर्माणस्तस्य गूढं विपेचिरे ॥ -रघु० १७-५३

यावदेव दिवसेषु पार्थिवः कर्म साधयति पुत्रजन्मने।
इत्यदर्शितरुजोऽस्य मन्त्रिणः शश्वदूचुरघशङ्किनीः प्रजाः ॥
-रघु० १९-५२

परकर्मापहः सोऽभूदुद्यतः स्वेषु कर्मसु।
आवृणोदात्मनो रन्ध्रं रन्ध्रेषु प्रहरन् रिपून् ॥ -रघु० १७-६१

न्यस्ताक्षरामक्षरभूमिकायां कार्त्स्न्येन गृह्णाति लिपिं न यावत्।
सर्वाणि तावत् श्रुतवृद्धयोगात्फलान्युपायुङ्क्त स दण्डनीतेः ॥
-रघु० १८-४६

तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥ -रघु० १-२०

न नवः प्रभुराफलोदयात्स्थिरकर्मा विरराम कर्मणः।
न च योगविधेर्नवेतरः स्थिरधीरापरमात्मदर्शनात् ॥ -रघु० ८-२२

लिङ्गैर्मुदः संवृतविक्रियास्ते ह्रदाः प्रसन्ना इव गूढनक्राः।
वैदर्भमामन्त्र्य ययुस्तदीयां प्रत्यर्प्य पूजामुपदाछलेन ॥ -रघु० ७-३०

---

अनुसृत्य, 'यद्यपि मन्त्र मन्त्रिभि सह प्रतिदिनं सेव्यते, गुप्तद्वारः सः तु न केन अपि ज्ञायते (रघु० १७-५०)' 'तस्य सारये. भव्यपुख्या समारम्भा. गर्भशालिसमाना. गूढ विपेचिरे' (रघु० १७-५३), 'स्वेषु कर्मसु उद्यतः रन्ध्रेषु रिपून् प्रहरन् आत्मन रन्ध्रम् आवृणोत्' (रघु० १७-६१) 'इत्यादिना 'षट्कर्णो-भिद्यते मन्त्र.' इति सिद्धान्तमुररीकृत्य मन्त्रिभिः सह ते ते राजान अजिताधिगमाय-मजितदेशप्राप्तये-युयुजिरे। रघुवंशे एकोनविंशतितमे सर्गे अग्निवर्णस्य मरणसमये

स राजलोकः कृतपूर्वसंविद् आरम्भसिद्धौ समयोपलभ्यम्।
आदास्यमानः प्रमदामिषं तदावृत्य पन्थानमजस्य तस्थौ ॥ –रघु० ७-३१

---

मरणानन्तरं च यद् मन्त्रविमर्शादिकं तस्य सचिवैः कृतम् तद् कालिदासीयवाङ्मये मन्त्रविमर्शस्य मन्त्रगोपनस्य च सर्वोत्तमं निदर्शनम्। एतदेव च 'संवृतमन्त्रस्य (रघु० १-२०),' 'कृतपूर्वसंवित् (रघु० ७-३१)' इत्यादिभिः उपबृंहितं भवति।

# ३ सुहृद्

## द्वादशराजमण्डलम्[1]

स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः।
षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥ —रघु० ४-२६

'सुहृद्' इति प्रकरणं 'स्वाम्यमात्यसुहृत्कोष-' इति क्रमानुसारं तृतीयं वर्तते। अत्र प्रकरणे विजिगीषुं राजानं केन्द्रमध्यवर्तिनं प्रकल्प्य तस्य कानि वा मित्राणि भवन्ति, मित्रैः साकं कथं वा वर्तितव्यम्, मित्राणि च अमित्राः कदा भवन्ति, अरीणां मण्डलं वंशपरम्परया कथम् अनुगतं भवति, तैः साकं कथं व्यवहारः सम्पादनीयः, तेषां सामन्तसम्भावना च कथम् आपादनीया तदर्थं च षड्गुणाः, चतस्रः नीतयः, तिस्रः शक्तयः, इत्यादि-मन्त्रविमर्शः कथं कर्तव्यः, इत्यादि सर्वात्मना राजनीतिमूलं विमर्शादिकम् अत्र सङ्गृह्यते। विजिगीषोः राज्ञः अवस्थानं तत्समीपवर्तिनां, शत्रुभावं समापन्नानां, मित्रभावं च उपगतानां, कार्यार्थिनाम्, अकृत्रिमाणां प्राकृतानां च स्वाभाविकं स्थानं कुत्र कथं च वर्तते, इत्येतत् प्रदर्शयितुं प्रथमत एव 'द्वादशराजमण्डलम्' इत्याख्यं प्रकरणम् अत्र सङ्ग्रथितम्। तत्प्रदर्शनार्थम् अत्र एका आकृतिरपि आलिखिता वर्तते। राजानं रघुं मध्यवर्तिनं विजिगीषुत्वेन प्रकल्प्य तस्य दिग्विजययात्रापयोऽपि समूचितः। 'वाराङ्गनेव नृपनीतिरनेकरूपा' इति राजनीतेः सम्यक्स्वरूपम् आविष्कुर्वता सुभाषितेन स्पष्टम् एव उद्घोषितम्, यत् शत्रुभावं समापन्नानां मित्रभावम् उपगतानां वा केषामपि राज्ञां चिरकालत्वेन स स धर्मो नैव अभिमतः। यतः सर्वोऽपि व्यवहारः परिस्थित्यधीनः, विजिगीषोः सामर्थ्यसापेक्षः च। अतः अत्र ये प्रदर्शिताः सम्भाविताश्च शत्रुमित्रभावाः, ते अत्यन्तं तत्कालस्वरूपिणः, तथापि यत्र कुत्रापि राजनि प्रदेशे वा सर्वेष्वपि कालेषु अनुगता एव ते भवन्ति, इत्यत्र तु सर्वेषामपि नीतिविदाम् ऐकमत्यम्। एवं च द्वादशराजमण्डलप्रदर्शनेन शत्रुमित्रभावयोः सम्यगाविष्करणेन षाड्गुण्यादीनां च राजनीतिप्रस्थापकानाम् आदितत्त्वानाम् सम्यग् विवरणेन, एतत्प्रकरणं अस्य ग्रन्थस्य हृदयम् इव स्थानेन तथा गुणैः च वर्तते, इति सर्वेषां सुस्पष्टं भवेत्।

१ द्वादशराजमण्डलम् 'इत्यस्मिन् उपप्रकरणे प्रायः विजिगीषुं नृपं लक्षीकृत्य शत्रुमित्रभावप्रदर्शकानि विजिगीषोः पारम्पर्यगानि च मण्डलानि सङ्-

**पराभिसन्धानपरं** यद्यप्यस्य विचेष्टितम् ।
**जिगीषोरश्वमेधाय** धर्म्यमेव बभूव तत् ॥ -रघु० १७-७६

उपगतोऽपि च **मण्डलनाभिताम्** अनुदितान्यसितातपवारणः ।
श्रियमवेक्ष्य स रन्ध्रचलाममूत् अनलसोऽनलसोमसमद्युतिः ॥ -रघु० ९-१५

पक्षच्छिदा गोत्रभिदात्तगन्धाः शरण्यमेनं शतशो महीध्राः ।
नृपा इवोपप्लविनः **परेभ्यो धर्मोत्तरं मध्यममाश्रयन्ते** ॥ -रघु० १३-७

**हीनान्यनुपकर्तॄणि प्रवृद्धानि विकुर्वते**
तेन **मध्यमशक्तीनि मित्राणि** स्थापितान्यपि ॥ -रघु० १७-५८

---

गृह्यन्ते। राज्ञ रघो प्रयाणसमये स रघु प्रथम मूल नाम स्वनिवासस्थान, प्रत्यन्त नाम प्रान्तदुर्गं च सरक्ष्य, शुद्धपार्ष्णिः नाम नाशितपृष्ठशत्रु सन् दिशो जेतु प्रतस्थे ( रघु ४-२६ ) इति अत्र सम्यग् वर्णितम् । रघुवशे सप्तदशे सर्गे च सम्राज अतिथे यत्पराभिसन्धानपर कुटिलनीत्यादि आचरणम् अभूत् तत् अश्व-मेधार्थम् आसीत्, इत्यनेन तत् धर्म्यमेव आसीत् इति कल्पितम् ( रघु १७-७६ ), नवमे सर्गे च 'मण्डलनाभिताम् सर्वात्मना विजिगीषुत्वम् आपन्न अपि दशरथ श्रियम् रन्ध्रचलाम् अवेक्ष्य नाम शत्रव रन्ध्रेष्वेव प्रहरन्ति, इति आलोच्य अनलस अभूत् ( रघु ९-१५ )' इत्यनेन विजिगीषूणा सावधानता प्रतिपादिता भवति। शत्रुभ्यः अभिभूतानाम्, आप्लविनाम्-भयवता नृपाणाम् आश्रयस्थान धर्मोत्तरा मध्यमा एव राजान भवन्ति, इत्येतत् (रघु १३-७) इत्यत्र सम्यक् आविष्कृतम् ।

द्वादशराजमण्डले शत्रुमित्रयो विमर्शे क्रियमाणे 'हीनानाम् अनुपकर्तृत्व, प्रबलाना च विरोध, अतः मध्यमशक्तीना नृपाणाम् एव साहाय्यम् अपेक्षणीयम् इति (रघु १७-१८) इत्यत्र सम्यक् प्रतिपादितम् । '**अनन्तरान्**-नाम यातव्य-पार्ष्णि-ग्राहादीन् नृपान् प्रभुशक्तिसम्पदा एव वशीकरणीयम् इति ( रघु ८-१९ )' अत्र सम्यक् प्रतिपादितम्। विजिगीषो राज्ञ सिंहासनादिवत् अरिमण्डलस्यापि वशपरम्परागतत्वमपि सम्भाव्यते इत्येतत् 'तेन रघुणा पित्र्य सिंहासनम् अरिमण्डल च सममेव समाक्रान्तम् (रघु ४—४)' इत्यनेन सम्यक् समूचितम् । रघो. दिग्विजय-यात्राप्रसङ्गेन कालिदासेन उद्धृताना 'यातव्य-पार्ष्णिग्राहादीना' द्वादशराजमण्डलान्तर्भूताना राज्ञा सामान्यत स्थानबोधो भवतु इति अत्र एका '**द्वादशराजमण्डलम्**' इति आकृति. अर्थशास्त्रानुसारम् आलिख्यते ।

## द्वादशराजमण्डलम्

- सप्ताङ्ग राज्यमुच्यते -

१ स्वामी
२ अमात्य
३ सुहृद्
४. कोष
५ राष्ट्रम्
६ दुर्ग
७ बलम्

| |
|---|
| १२ अरिमित्रमित्रनृप<br>२, ४, ५, ६, ७ |
| ९ मित्रमित्रनृप.<br>२, ४, ५, ६, ७ |
| ८ अरिमित्रनृप<br>२, ४, ५, ६, ७ |
| ५ मित्रनृप<br>२, ४, ५, ६, ७ |
| २ अरिः<br>२, ४, ५, ६, ७ |
| १ विजिगीषु राजाः<br>२. अमात्या ४ कोश<br>५ राष्ट्रम् ६ दुर्ग ७ बलम |
| ६ पार्ष्णिग्राह नृप<br>२, ४, ५, ६, ७. |
| ७ आक्रन्द नृप<br>२, ४, ५, ६, ७ |
| १० पार्ष्णिग्राह नृप<br>२, ४, ५, ६, ७. |
| ११ आक्रन्दासारः नृप<br>२, ४, ५, ६, ७ |

| | | | |
|---|---|---|---|
| ३ उदासीन नृप<br>२,४,५,६,७ | ३ मध्यमः नृपः<br>२,४,५,६,७ | ३ मध्यम नृप.<br>२,४,५,६,७. | ४ उदासीनः नृप<br>२,४,५,६,७ |

य कमपि राजानं विजिगीषुत्वेन प्रकल्प्य अन्ये ते ते राजानः अरि-मित्रोदासीनभावं समापादनीयाः । सर्वत्र अयमेव क्रम स्याद् इति वक्तुं न शक्यते । तथापि सामान्यतः राजमण्डलज्ञानार्थम् इयम् आकृतिः अत्र आलिख्यते । अत्र आकृतौ, १ राजा, ३ सुहृद्, इति द्वौ साक्षादेव निर्दिष्टौ । अवशिष्टानि पञ्च अङ्गानि अध्यवसेयानि भवन्ति ।

**अनयत् प्रभुशक्तिसंपदा** वशमेको नृपतीननन्तरान् ।
अपरं प्रणिधानयोग्यया मरुतः पञ्च शरीरगोचरान् ॥ -रघु० ८-१९

सममेव समाक्रान्तं द्वयं द्विरदगामिना ।
तेन सिंहासनं पित्र्यमखिलं चारिमण्डलम् ॥ -रघु० ४-४

दिग्विजययात्रारम्भो²

सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान् ।
**यात्रायै** चोदयामास तं शक्तेः प्रथमं शरत् ॥ -रघु० ४-२४

तस्मै सम्यग्घुतो वह्निर्वाजिनीराजनाविधौ ।
प्रदक्षिणार्चिर्व्याजेन हस्तेनेव जयं ददौ ॥ -रघु० ४-२५

---

अरिर्मित्रमरेर्मित्र मित्रमित्रमतः परम् ।
तथारिमित्रमित्रं च विजिगीषोः पुरःसरा ॥
पार्ष्णिग्राहस्ततः पश्चात् आक्रन्दस्तदनन्तरम् ।
आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः ॥
अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः ।
अनुग्रहे संहतयोः समर्थो व्यस्तयोर्वधः ॥
मण्डलात् बहिरेतेषामुदासीनो बलाधिकः ।
अनुग्रहे संहतानां व्यस्तानां च वधः प्रभुः ॥

अरिमित्रादयः पञ्च विजिगीषोः पुरःसराः पार्ष्णिग्राहाक्रन्दपार्ष्णिग्राहासाराक्रन्दासाराः इति पृष्ठतः चत्वारः, मध्यमोदासीनौ द्वौ विजिगीषुः एकः इति द्वादशराजमण्डलम् ।

२ **दिग्विजयः यात्रारम्भश्च** *इत्येतस्मिन् उपप्रकरणे विजिगीषुभिः नृपैः* दिग्विजयार्थमं कदा प्रस्थातव्यम् निसर्गोऽपि **यात्रायै** कदा चोदयति प्रस्थानसमये के के विषयाः कल्पिता भवन्ति इत्यादिप्रदर्शकानि वचनानि अत्र सङ्गृह्यन्ते। प्रथमतः एव आत्मनः परस्य च बलाबलं सम्यक् ज्ञात्वैव विजिगीषुः स्वयं बलिष्ठः चेत् तर्हि एव यात्रायै प्रस्थातुम् अर्हति (रघु० १७-५९) इत्यत्र सम्यक् उक्तम् ।

स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः ।
षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥ -रघु० ४-२६

स ययौ प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा ।
अहिताननिलोद्धूतैस्तर्जयन्निव केतुभिः ॥ -रघु० ४-२८

अथाधिशिश्ये प्रयतः प्रदोषे रथं रघुः कल्पितशस्त्रगर्भम् ।
सामन्तसम्भावनयैव धीरः कैलासनाथं तरसा जिगीषुः ॥ -रघु० ५-२८

परात्मनोः परिच्छिद्य शक्त्यादीनां बलाबलम् ।
ययावेभिर्बलिष्ठश्चेत्परस्मादास्त सोऽन्यथा ॥ -रघु० १७-५९

अरिमण्डलम्[3]

दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम् ।
पूर्वं प्रधूमितो राज्ञां हृदयेऽग्निरिवोत्थितः ॥ -रघु० ४-२

---

तदाह मनु —' यदा मन्येत भावेन हृष्टं पुष्टं बलं स्वकम् । परस्य विपरीतं चेत् तदा यायादरीन् प्रति ॥ १ ॥ यदा तु स्यात् परिक्षीणो वाहनेन बलेन च । तदासीत प्रयत्नेन शनकैः सान्त्वयन्नरीन् ॥ २ ॥ ' इति शरदि यात्रानुकूलं सर्वम् अवलोक्य एव विजिगीषव पार्थिवा अस्मिन् ऋतौ दिग्विजयार्थम् जिगमिषव, इत्येतत् 'सरित कुर्वती गाधा शरत् यात्रायै चोदयामास' ( रघु०४-२४ ) इत्यत्र वर्णितम् । यात्राप्रस्थानसमये वाजिगजरथादीनां षड्विधानां बलानां नीराजनाविधि 'तस्मै सम्यग्घुतो वह्नि (रघु० ४-२५) ' इत्यनेन सम्यक् उक्तम् । यात्राप्रस्थानसमये विजिगीषुणा राज्ञा प्रथमं स्वराष्ट्रे प्रबन्धं स्थापयितव्यम् इत्येतत् ' स (रघु) गुप्तमूलप्रत्यन्त एव दिग्जिगीषया प्रतस्थे (रघु० ४-२६) ' इत्यनेन संसूचितम् ॥

३. ' अरिमण्डलम् '— इत्यस्मिन् उपप्रकरणे विजिगीषु राज्ञा [illegible] [illegible] भवति इत्येतत्सम्बन्धीनि वचनानि [illegible] । राज्ञा [illegible] एव [illegible] इति [illegible] । विशेषत [illegible] स्थाने [illegible] भवति [illegible], तदा '[illegible]

समसेव समाक्रान्तं द्वयं द्विरदगामिना ।
तेन सिंहासनं पित्र्यमखिलं चारिमण्डलम् ॥ -रघु० ४-४

अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात् ।
नवसंरोहणशिथिलस्तरुरिव सुकरः समुद्धर्तुम् ॥ -मालविका० १-८

तथापि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरमस्य तस्थुषः ।
तुतोष वीर्यातिशयेन वृत्रहा पदं हि सर्वत्र गुणैर्निधीयते ॥ -रघु० ३-६२

तमुद्वहन्तं पथि भोजकन्यां रुरोध राजन्यगणः स दृप्तः ।
बलिप्रदिष्टां श्रियमाददानं त्रैविक्रमं पादमिवेन्द्रशत्रुः ॥ -रघु० ७-३५

निववृते स महार्णवरोधसः सचिवकारितबालसुताञ्जलीन् ।
समनुकम्प्य सपत्नपरिग्रहान् अनलकानलकानवमां पुरीम् ॥ -रघु० ९-१४

प्रायो विषाणपरिमोक्षलघूत्तमाङ्गान्
खड्गांश्चकार नृपतिर्निशितैः क्षुरप्रैः ।
शृङ्गं स दृप्तविनयाधिकृतः परेषाम्
अत्युच्छ्रितं न ममृषे न तु दीर्घमायुः ॥ -रघु० ९-६२

भरतस्तत्र गन्धर्वान् युधि निर्जित्य केवलम् ।
आतोद्यं ग्राहयामास समत्याजयदायुधम् ॥ -रघु० १५-८८

---

अरूढमूलत्वात् अचिराधिष्ठितराज्य ' राज्ञाम् अत्यन्त द्वेष्यो भवति, एतदेव च ' दिलीपानन्तर रघु राज्ये प्रनिष्ठित निशम्य पूर्वं राज्ञा हृदये प्रधूमित अग्नि. उत्थित इव ' (रघु० ४-२) ', ' तेन रघुणा पित्र्य सिंहासनम् अखिलम् अरि-मण्डलम् समाक्रान्तम् ' च (रघु० ४-४.) इत्यादिवर्णनैं सम्यक् स्फुटं भवति । ' विपक्षभाव शस्त्रव्यवहारनिष्ठुर एव, न तु प्राकृतिकसौहार्दानुगुण ' इत्येतत् इन्द्रस्य रघो च संवादे (रघु० ३-६२) ज्ञात भवति । शत्रूणा सर्वथा नाशः कर्तव्य, तथाच ' शत्रुशेष न रक्षयेत् ' इति नीतिरपि प्रथिता, तथापि शत्रूणाम् अपि बालसुतविषये विशेपतश्च अन्त पुरपरिग्रहविषये च अनुकम्पा एव प्रदर्शनीया इत्येतत् ' सचिवकारितबालसुताञ्जलीन् शत्रुपरिग्रहान् समनुकम्प्य (रघु० ९-१४)

जेतारं लोकपालानां स्वमुखैरर्चितेश्वरम् ।
रामस्तुलितकैलासमरातिं बह्वमन्यत ॥ -रघु० १२-८९

सपूर्ववैरातिसर्गाच्च मया तस्य दुरात्मनः ।
अत्यारूढं रिपोः सोढं चन्दनेनेव भोगिनः ॥ -रघु० १०-४२

त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैः ।
तस्यासीदुल्बणो मार्गः पादपैरिव दन्तिनः ॥ -रघु० ८-३३

अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः ।
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥ -रघु० ४-६४

वशी सुतस्तस्य वंशवदत्वात्स्वेषामिवासीद्द्विषतामपीष्टः ।
सकृद्विविग्नानपि हि प्रयुक्तं माधुर्यमीष्टे हरिणान् ग्रहीतुम् ॥
-रघु० १८-१३

यदुवाच न तन्मिथ्या यद्ददौ न जहार तत् ।
सोऽभूद्भग्नव्रतः शत्रूनुद्धृत्य प्रतिरोपयन् ॥ -रघु० १७-४२

---

इत्यत्र सम्यक् प्रकटीकृतम् । शत्रूणामपि शरीरनाशापेक्षया कीर्तिनाशायैव प्रयत्नीयम् इत्येतत् 'दशरथ परेषाम् अयुच्छिन्न यश न ममृषे, न तु दीर्घमायु' (रघु० ९-६२) इत्यनेन सम्यक् प्रकटीभवति । सङ्ग्रामे पराजितं शत्रुभि स्वकीय कीर्तिगान कर्तव्यम्, स एव च तेषा पारमार्थिक पराभव इत्यपि (रघु० १५-८८) इत्यत्र सम्यक् प्रदर्शितम् । अत्यन्त प्रतिकूलम् आचरताम्, दुरात्मनाम्, अरीणाम्, दुष्कृत्यानि अपि पूर्वदत्तवचनानुमारेण साह्यानि भवन्ति, न तु वचनभङ्ग कर्तव्य इत्येतत् अपि (रघु० १०-४२) इत्यादिभिः वर्णनैः ज्ञातु शक्यते । 'शरण समागतैः अरिभि विजिगीषा पादार्चनम् अपनीतकिरीटैः सद्भि कर्तव्यम्' इति इयमपि परिपाटी नैकेभ्य वचनेभ्य ज्ञातु शक्यते । एकवार शत्रुभाव समापन्ना 'सर्वथा शत्रव एव' इति मत्वा तैः सह तादृशः एव व्यवहार न कर्तव्य इत्येतत् 'सकृद्विविग्नानपि अरीन् ग्रहीतुम् माधुर्यम् अपेक्षित भवति (रघु० १८-१३) इत्यत्र सम्यक् प्रतिपादितम् । एकवारम् शत्रुभाव समापन्नान् अपि नृपतीन् तेषु अनुग्रहबुद्ध्या पुन तत्तेषा प्रदेशेषु तान् एव संस्थाप्य स्वसामन्तभावम् आपादनीया ते इत्यपि 'शत्रून् उद्धृत्य प्रतिरोपयन् स अतिष्ठि' (रघु० १७-४२) इत्यनेन सम्यक् प्रकटीकृतम् ।

मित्रवर्गः[४]

अर्थं सप्रतिबन्धं प्रभुरधिगन्तुं सहायवानेव ।
दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥ मालविका० १-९

हीनान्यनुपकर्तॄणि प्रवृद्धानि विकुर्वते ।
तेन मध्यमशक्तीनि मित्राणि स्थापितान्यतः ॥ -रघु० १७-५८

वधनिर्धूतशापस्य कबन्धस्योपदेशतः ।
मुमूर्छ सख्यं रामस्य समानव्यसने हरौ ॥
स हत्वा वालिनं वीरस्तत्पदे चिरकाङ्क्षिते ।
धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत् ॥ -रघु० १२.५७-५८

रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियाम्
प्रियसुहृदि विभीषणे सङ्गमय्य श्रियं वैरिणः ।
रविसुतसहितेन तेनानुयातः ससौमित्रिणा
भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम् ॥ -रघु० १२-१०४

---

४ 'मित्रवर्ग' इत्यस्मिन् उपप्रकरणे वीर्यातिशयशालिन, षड्गुणसम्पन्नस्य, नीतिचतुष्ट्योपपन्नस्य, शक्तित्रयससेव्यमानस्य अपि नृपस्य कार्यं, विना मित्रं पूर्णतया ससाधित न भवति, अत मित्राणि अत्यन्तमावश्यकानि, तानि च किंस्वरूपाणि अपेक्ष्यन्ते, तेषाच किं कार्यम् इत्येतन्निदर्शकानि वचनानि अत्र सङ्गृह्यन्ते ।

अत्र प्रथमे श्लोके एव स्पष्ट प्रतिपादितम्, यत् अन्धकारे दीपेन विना कस्यापि चक्षुष्मत कार्यं न भवति, तद्वदेव विविधं प्रतिबन्धं सहित कार्यम् सपादयितु मित्राणाम् अत्यन्तम् आवश्यकता (मालविका० १-९) । द्वितीयश्लोके राज्ञा अतिथिनापि मध्यमशक्तिशाली मित्रवर्गः निर्मित (रघु० १७-५८) अनेन च वचनेन मित्राणा सामान्यत मध्यमशक्तिमत्वम् एव बोध्यते, यतः शक्तिहीनानाम् कार्याय उपयोगो न भवति, सबलाश्च प्राय मत्सरेण जिगीषया च विरोधकाः एव भवन्ति-नाम-तेषाम् अरिमण्डले एव समावेशो भवति इति पूर्वार्धेन प्रतिपादितम् । समानशक्ति-मत्वमिव समानव्यसनमपि राज्ञा मित्रभावस्य कारण भवति इति 'समानव्यसन रामस्य सख्य मुमूर्छ' (रघु० १२—५७) इत्यनेन स्पष्टम् उक्त भवति । मित्र-

उदयमस्तमयं च रघूद्वहादुभयमानशिरे वसुधाधिपाः ।
स हि निदेशमलङ्घयतामभूत्सुहृदयोहृदयः प्रतिगार्जिताम् । -रघु० ९-९

मातलिः — सख्युस्ते स किल शतक्रतोरजय्यः
तस्य त्वं रणशिरसि स्मृतो निहन्ता ।
उच्छेत्तुं प्रभवति यन्न सप्तसप्तिः
तन्नैशं तिमिरमपाकरोति चन्द्रः ॥

राजा–अनुगृहीतोऽहम् अनया मघवतः संभावनया ।–शा० ६; पृ० २२८

दुर्जातबन्धुरयमृक्षहरीश्वरो मे पौलस्त्य एष समरेषु पुरःप्रहर्ता ।
इत्यादृतेन कथितौ रघुनन्दनेन व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥
–रघु० १३-७२

**सामन्त-व्यवहारः**[५]

अनम्राणां समुद्धर्तुस्तस्मात्सिन्धुरयादिव ।
आत्मा संरक्षितः सुह्मैः वृत्तिमाश्रित्य वैतसीम् ॥ -रघु० ४-३५

---

भाव समागतेषु नृपेषु अनुग्रहार्थं तेभ्य राज्यादिप्रदान विजिगीषुणा कार्यम् इत्येतत् 'चिरकाङ्क्षिते तत्पदे सुग्रीव सन्यवेशयन्' (रघु० १२—५८) 'प्रियसुहृदि विभीषणे वैरिण श्रिय सङ्गमय्य' (रघु० १२—१०४) इत्यादिभि वचनै स्पष्ट प्रतिपादितम् । यथा स्वय विजिगीषुणा कानिचित् मित्राणि सम्पादनीयानि, तेभ्य च स्वकीय कार्यं सम्पादनीयम् इति उक्त, तथैव स्वयमपि कस्यचन विजिगीषोः मित्रभावः सम्पादनीय तद्द्वारा स्वकीय कार्य सम्पादनीयम् इत्यपि 'शतक्रतोः इन्द्रस्य य अजय्य तस्य त्व रणशिरसि निहन्ता स्मृत । यन्नैश तम सूर्य अपाकर्तुं न प्रभवति तदेव च तम चन्द्र अपाकरोति । ' इति मातलिवचनेन, तदनन्तर झटिति राज दुष्यन्तस्य 'अनुगृहीतोऽहम् अनेन मघवत इन्द्रस्य अनुग्रहेण' (शाकु ६. पृ. २२८) इति वचनेन मित्रभावस्य अपर अश अपि स्पष्ट ज्ञायते । 'आपदि मित्र-परीक्षा' इति सूक्तिस्मरणम् अपि 'दुर्जातबन्धु' 'समरेषु पुर प्रहर्ता', (रघु० १३-७२ ) इत्यादिभि वचनै भवत्येव ।

५ '**सामन्तव्यवहारः**' इत्यस्मिन् उपप्रकरणे विजिगीषुणा राज्ञा सह सामन्ताना व्यवहार कीदृक् भवति इत्येतत्प्रदर्शकानि वचनानि सङ्गृह्यन्ते ।

**आपातपद्मप्रणताः** कलमा इव ते रघुन् ।
**फलैः संवर्धयामासुरुत्खातप्रतिरोपिताः** ॥ –रघु० ४–३७

कम्बोजाः समरे **सोढुं तस्य वीर्यमनीश्वराः ।**
गजालानपरिक्लिष्टैरक्षोटैः **सार्धमानताः** ॥ –रघु० ४–६९

**तमीशः** कामरूपाणामत्याखण्डलविक्रमम् ।
**भेजे भिन्नकटैर्नागैर**न्यानुपरुरोध यैः ॥ –रघु० ४–८३

**कामरूपेश्वरस्तस्य** हेमपीठाधिदेवताम् ।
रत्नपुष्पोपहारेण छायामा**नर्च पादयोः** ॥ –रघु० ४–८४

**गृहीतप्रतिमुक्तस्य** स धर्मविजयी नृपः ।
**श्रियं** महेन्द्रनाथस्य **जहार न तु मेदिनीम्** ॥ –रघु० ४–४३

**न खरो न च भूयसा मृदुः** पवमानः पृथिवीरुहानिव ।
स पुरस्कृतमध्यमक्रमो नमयामास नृपाननुद्धरन् ॥ –रघु० ८–९

**अनयत्प्रभुशक्तिसम्पदा वशमेको नृपतीनन्तरान् ।**
अपरः प्रणिधानयोग्यया मरुत. पञ्च शरीरगोचरान् ॥ –रघु० ८–१९

---

दिग्विजयार्थं प्रस्थितस्य राज रघो ये ये राजान समागता, ते सर्वैः अपि विविधैः नम्रभावप्रदर्शकं स्वकीयैं आचरिनै आत्मन राज्य सरक्षितम्, इत्येतत् महता वर्णनेन सम्यक् आविष्कृतम् । सुह्मदेशीय राजान वेतससदृशी वृत्तिम् आश्रितवन्त (रघु० ४–३५), वङ्गदेशीया राजान आपादपद्मप्रणताः सन्त रघु सवर्धयामासु (रघु० ४–३७), कम्बोजदेशीया राजान समये एव तस्य साहाय्य कर्तुं सज्जीभूता (रघु० ४–६९), 'कामरूप' इत्याख्याना देशाना राजा उत्कृष्टदन्तिनाम् प्रदानेन विजिगीषु राजान रघु सिषेवे, किञ्च उपहाररूपेण रत्नपुष्पै अपि तम् अर्चयामास (रघु ४–८३, ८४) इत्यादि सविस्तरैः विविधैः वर्णनै सम्यक् ज्ञातु शक्यते । अत्र च सामन्तव्यवहारे साक्षात् भूप्रदेशस्य अपहरण न आसीत्, किन्तु कररूपेण अग्रहाररूपेण वा लक्ष्म्या – सम्पद एव स्वीकार सर्वत्र विजिगीषव चक्रुः

पक्षच्छिदा गोत्रभिदात्तगन्धाः शरण्यमेनं शतशो महीध्राः ।
नृपा इवोपप्लविनः परेभ्यो धर्मोत्तरं मध्यममाश्रयन्ते ॥
-रघु० १३-२२

तमध्वराय मुक्ताश्वं रक्षःकपिनरेश्वराः ।
मेघाः सस्यमिवाम्भोभिरभ्यवर्षन्नुपायनैः ॥ -रघु० १५-५८

दूरापवर्जितच्छत्रैस्तस्याज्ञां शासनार्पिताम् ।
दधुः शिरोभिर्भूपाला देवाः पौरन्दरीमिव ॥ -रघु० १७-७९

चरणयोर्नखरागसमृद्धिभिर्मुकुटरत्नमरीचिभिरस्पृशन् ।
नृपतयः शतशो मरुतो यथा शतमखं तमखण्डितपौरुषम् ॥ -रघु० ९-१३

ते रेखाध्वजकुलिशातपत्रचिह्नम् सम्राजश्चरणयुगं प्रसादलभ्यम् ।
प्रस्थानप्रणतिभिरङ्गुलीषु चक्रुः मौलिस्रक्च्युतमकरन्दरेणुगौरम् ॥
-रघु० ४-८८

---

इत्येतत् 'गृहीतप्रतिमुक्तस्य श्रियं जहार न मेदिनीम् (रघु० ४ ४३)" इति वर्णनेन सम्यक् ज्ञातु शक्यते । "सामन्ताना नाशापेक्षया ते यथा नम्रभाव प्राप्नुयु तथैव सम्राजा विजिगीषुणा राज्ञा वर्तितव्यम्" इत्येतत् "पुरस्कृतमध्यम स (अज) नृपान् अनुद्धरन् सन् नमयामास (रघु० ८-९)' इत्यनेन स्पष्टम् आविष्कृतम् । द्वादशराजमण्डले यातव्य-पार्ष्णिग्राहादिस्थान समापन्नान् नृपतीन् कोश-दण्डयो महिम्ना वशीकर्तव्यम्' इति 'प्रभुशक्तिसम्पदा अनन्तरान् नृपतीन् वशम् आनयत्' (रघु० ८-१९) इत्यनेन स्पष्ट भवति ।

सामन्तभाव सम्पादयितु समुत्सुका उपप्लविनः राजानः विजिगीषोः सम्राज धर्मोत्तरत्व प्राधान्येन अपेक्षन्ते इत्येतत् "नृपा इवोपप्लविन परेभ्यो धर्मोत्तर मध्यममाश्रयन्ते (रघु० १३-२२)" इत्यनेन स्पष्ट प्रतिपादितम् । यथाकाल सामन्तं उपायनादिप्रदानेन सम्राजा सत्कारादिक सम्पादनीयम्, स्वकीयसेवाभावश्च आविष्करणीय इति (रघु० १५-५८, १७-७९, ९-१३, ४-८८), इत्यादिभि. श्लोकैः सम्यक् ज्ञायते ।

## शक्तित्रयम्[६]

सर्पस्येव शिरोरत्नं नास्य शक्तित्रयं परः ।
स चकर्ष परस्तस्मात्तदयस्कान्त इवायसम् ॥ –रघु० १७–६३

प्रियतमाभिरसौ तिसृभिर्बभौ तिसृभिरेव भुवं सह शक्तिभिः ।
उपगतो विनिनीषुरिव प्रजा हरिहयोऽरिहयोगविचक्षणः ॥ –रघु० ९–१८

ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसम्पदम् ।
असूत पुत्रं समये शचीसमा त्रिसाधना शक्तिरिवार्थमक्षयम्
–रघु० ३–१३

अनयत्प्रभुशक्तिसम्पदा वशमेको नृपतीननन्तरान् ।
अपरः प्रणिधानयोग्यया मरुतः पञ्च शरीरगोचरान् ॥ –रघु० ८–१९

---

६ '**शक्तित्रयम्**'— इत्यस्मिन् उपप्रकरणे प्रभुमन्त्रोत्साहशक्तीना निर्देशपराणि वचनानि सङ्गृह्यन्ते। राजनीतौ मन्त्रशक्तेः प्राधान्येन निरूपणाय '**सचिव**' इत्यस्मिन् प्रकरणे '**मन्त्रविमर्श**' इत्येकम् उपप्रकरण पार्थक्येन कृतम् । अतः अत्र शक्तित्रयरूपेण मन्त्रशक्ते यत्र समावेश तानि एव वचनानि 'शक्तित्रयम्' इत्यस्मिन् उपप्रकरणे सङ्गृह्यन्ते । तिसृभि शक्तिभि एव राज्ञा सर्व कार्यं साधित भवति इति एतन्निदर्शकानि सदृशाकाराणि बहूनि वचनानि वर्तन्ते । 'सर्पस्य शिरोरत्नमिव अतिथे शक्तित्रयम् अपक्रष्टु कोऽपि समर्थ न बभूव । अतिथिस्तु शत्रुभ्य तदेव शक्तित्रयम्, अयस्कान्तः लोहम् इव, विनायासमेव अपकृष्टवान्' (रघु० १७–६३ ) इति वर्णनेन अतिथे प्रभुमन्त्रोत्साहशक्तीना बलम्, अन्यनृपाणा प्रभुमन्त्रोत्साहशक्त्यपेक्षया अधिकतरम् आसीत् इति स्पष्ट ज्ञायते । तथैव 'दशरथ तिसृभि भार्याभि सेव्यमान तथैव तिसृभि प्रभुमन्त्रोत्साहशक्तिभि सेव्यमान.' (रघु०९-१८) इत्यत्र, तथैव 'त्रिसाधना शक्ति अक्षयम् अर्थम् इव शचीसमा सुदक्षिणा सुमुहूर्ते पुत्र (राजान रघुम्) असूत' (रघु०३–१३) इत्यत्रापि वैभवप्राप्तये अक्षय्यार्थप्राप्तये च शक्तित्रयम् एव मूलम् इति स्पष्टम् आविष्कृतम् । 'प्रभुशक्तिबलात् एव स एकोऽपि अज नैकान् नृपतीन् वशम् अनयत्' ( रघु० ८–१९ ) इत्यनेन क्रमत प्राथम्यम् इव, शक्तिषु प्रभुशक्ते प्राधान्यम् अपि वर्तते 'इति अत्र सम्यक् ससूचितम् । यात्रार्थं दिग्विजयाय वा प्रस्थातुकामाना विजिगीषूणा नृपाणा

सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान् ।
यात्रायै चोदयामास तं शक्तेः प्रथमं शरद् । -रघु० ४-२४

नीतिचतुष्टयम् [७]

ते चतुर्थसहितास्त्रयो बभुः सूनवो नववधूपरिग्रहाः ।
**सामदानविधिभेदनिग्रहाः** सिद्धिमन्त इव तस्य भूपतेः ॥ -रघु० ११-५५

सुरगज इव दन्तैर्भग्नदैत्यासिधारैः
**नय इव पणबन्धव्यक्तयोगैरुपायैः ।**
हरिरिव युगदीर्घैर्दोर्भिरंशैस्तदीयैः
पतिरवनिपतीनां तैश्चकाशे **चतुर्भिः** ॥ -रघु० १०-८६

तस्मै निशाचरैश्वर्यं प्रतिशुश्राव राघवः ।
काले खलु समारब्धाः **फलं बध्नन्ति नीतयः** ॥ -रघु० १२-६९

सौमित्रिणा सावरजेन मन्दमाधूतबालव्यजनो रथस्थः ।
धृतातपत्रो भरतेन **साक्षादुपायसङ्घात इव प्रवृद्धः** ॥ -रघु० १४-११

---

शक्तित्रयस्य साहाय्यम् एव अपेक्ष्यते इत्येतत् 'शक्ते प्रथम राजान रघु शरद् यात्रायै चोदयामास' (रघु० ४-२४) इत्यत्र स्पष्टम् उक्तम् । अत, सर्वै अपि नृपै. विशेषत च विजिगीषुभि प्रभुमन्त्रोत्साहशक्तिसम्पन्नैः एव भाव्यम् इति अनेन प्रकरणेन ज्ञातु शक्यते ।

७ '**नीतिचतुष्टयम्**' इत्यस्मिन् उपप्रकरणे प्रसिद्धाना 'साम-दान-दण्ड-भेद' इत्याख्याना चतसृणा नीतीना निर्देशपराणि वचनानि अत्र सङ्गृह्यन्ते । रामलक्ष्मणभरतशत्रुघ्ना चत्वार मूर्तिमन्तः साम-दानविधि-भेद-निग्रहा इव बभूवुः इति (रघु० ११-५५) इत्यत्र प्रकटीकृतम् । 'पणबन्धेन नाम साम्ना एव ज्ञातोपयोगै. चतसृभिः नीतिभि इव, चतुर्भि कुमारै स राजा दशरथः शुशुभे (रघु० १०-८६) इत्यत्र उक्तम् । योग्यकाले एव समारब्धा सामदानादय नीतयः फल बध्नन्ति; अत एव राघव. तस्मै विभीषणाय रावणराज्यदान प्रतिशुश्राव'

गुरोः स चानन्तरमन्तरज्ञः पुंसां पुमानाद्य इवावतीर्णः ।
**उपक्रमैरस्खलितैश्चतुर्भिः** चतुर्दिगीशश्चतुरो बभूव ॥ -रघु० १८-१५

इति क्रमात्प्रयुञ्जानो **राजनीतिं चतुर्विधाम्** ।
आ तीर्थादप्रतीघातं स तस्याः फलमानशे ॥ -रघु० १७-६८

पित्रा संवर्धितो नित्यं कृतास्त्रः साम्परायिकः ।
तस्य **दण्डवतो दण्डः** स्वदेहान्न व्यशिष्यत ॥ -रघु० १७-६२

वैतालिकः— दिष्टया **दण्डेनैवारिशिरःसु** वर्तते देवः ।
-मालविका० अ० ५, पृ. १३१

स हि सर्वस्य लोकस्य **युक्तदण्डतया** मनः ।
आददे **नातिशीतोष्णो** नभस्वानिव दक्षिणः ॥ -रघु० ४-८

**स्थित्यै दण्डयतो दण्ड्यान्**परिणेतुः प्रसूतये ।
अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ॥ -रघु० १-२५

**समतया** वसुवृष्टिविसर्जनै**र्नियमनादसतां च नराधिपः** ।
अनुययौ यमपुण्यजनेश्वरौ सवरुणावरुणाग्रसरं रुचा ॥ -रघु० ९-६

---

(रघु० १२-६९), चतुर्दशे सर्गे अपि 'चतुर्णां भ्रातृणा प्रवृद्धः साक्षाद् उपाय-सङ्घात इव' इत्यनेनापि चतसृणा नीतीना स्थाने स्थाने सहेतु वैशिष्ट्य बोधयति। 'अस्खलितैश्चतुर्भि उपक्रमैः स अहीनगु राजा चतुर्दिगीशः बभूव' (रघु० १८-१५) इत्यत्र '**उपक्रम**'शब्देनापि सामादिनीतीनामेव बोधः। दण्डनीतेः पार्थक्येन वैशिष्ट्यपूर्वं प्रतिपादनावसरे 'तस्य दण्डवत अतिथे. दण्ड. स्वदेहाद् न अभिद्यत' (रघु० १७-६२) इत्यत्र, तथैव 'दिष्टया दण्डेनैव अरिशिरस्सु वर्तते देवः' (मालविका. ५ पृ० १३१) तथा च 'नातिशीतोष्ण दक्षिण. नभस्वान् इव रघु युक्तदण्डतया सर्वस्य मनः आददे' (रघु० ४-८), 'स्थित्यै एव दण्ड्यान् दण्डयतः' (रघु० १-२५) तथा च 'अत्यन्त बाल्यदशाया' एव सः सुदर्शन. श्रुतवृद्धयोगात् दण्डनीतेः फलानि अन्वभूत्' (रघु० १८-४६), इत्यादिषु वचनेषु राज्ञा मूलाधारभूतायाः दण्डनीते. महत्त्वप्रतिपादकानि वचनानि सग्रथितानि। उत्तमसूक्तित्वेन स्यात, 'केवला नीति. प्रयुक्ता सती कातर्यम् आविष्कृत भवति,

तस्यामेवास्य यामिन्यामन्तर्वत्नी प्रजावती।
सुतावसूत सम्पन्नौ कोशदण्डाविव क्षितिः॥ –रघु० १५-१३

न्यस्ताक्षरामक्षरभूमिकायां कात्स्न्येंन गृह्णाति लिपिं न यावत्।
सर्वाणि तावच्छ्रुतवृद्धयोगात्फलान्युपायुङ्क्त स दण्डनीतेः॥
–रघु० १८-४६

कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम्।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः। –रघु० १७-४७

षाड्गुण्यम्[८]

पणबन्धमुखान् गुणानजः षडुपायुङ्क्त समीक्ष्य तत्फलम्।
रघुरप्यजयद्गुणत्रयं प्रकृतिस्थं समलोष्टकाञ्चनः॥ –रघु० ८-२१

स गुणानां बलानां च षण्णां षण्मुखविक्रमः।
बभूव विनियोगज्ञः साधनीयेषु वस्तुषु॥ –रघु० १७-६५

सा भूधराणामधिपेन तस्यां समाधिमत्यामुदपादि भव्या।
सम्यक्प्रयोगादपरिक्षतायां नीताविवोत्साहगुणेन सम्पत्॥
–कुमार० १-२२

तस्मिन्नुपायाः सर्वे नः क्रूरे प्रतिहतक्रियाः।
वीर्यवन्त्यौषधानीव विकारे सांनिपातिके॥ –कुमार० २-४८

---

केवलं शौर्यम् आश्रियते चेत् तत् श्वापदचेष्टितं नाम पाशवी प्रवृत्तिं बोधयति, (रघु० १७-४७) इत्यत्र नीतिशब्दः सामदानयोः बोधकः, शौर्य-शब्दश्च दण्डभेदयो बोधकः इति।

८ 'षाड्गुण्यम्' इत्यस्मिन् उपप्रकरणे (१) सन्धिः, (२) विग्रहः (३) यानम्, (४) आसनम्, (५) द्वैधम् (६) आश्रय इति षण्णां गुणानां वर्णनपराणि वचनानि समुद्धृतानि। मनुः एतेषाम् एव षण्णां गुणानाम् उल्लेखं-

**नयगुणोपचितामिव** भूपतेः सदुपकारफलां श्रियमर्थिनः।
अभियुः सरसो मधुसम्भृतां कमलिनीमलिनीरपतत्रिणः॥ –रघु० ९–२७

शक्येष्वेवाभवद्यात्रा तस्य शक्तिमतः सतः।
समीरणसहायोऽपि नाम्भःप्रार्थी दवानलः॥ –रघु० १७–५६

परात्मनोः परिच्छिद्य **शक्त्यादीनां बलाबलम्।**
ययावेभिर्बलिष्ठश्चेत्परस्मादास्त सोऽन्यथा॥ –रघु० १७–५९

राजा—वाहतक, किं प्रतिपद्यते वैदर्भः।

अमात्यः—देव, आत्मविनाशम्।

राजा—लिखितं निदेशं श्रोतुमिच्छामि।

अमात्य—इदं तद् लिखितम्।– "पूज्येनाहमादिष्टः 'भवतः पितृव्यपुत्रः कुमारो माधवसेनः प्रतिश्रुतसम्बन्धः ममोपान्तिकमागच्छन्नन्तरा त्वदीयेनान्तपालेन अवस्कन्द्य गृहीतः। स त्वया मदपेक्षया सकलत्रसोदर्यः मोचयितव्यः' इति। तन्न वो न विदितं **यत्तुल्याभिजनेषु भूमिहरेषु राज्ञां प्रवृत्तिरीदृक्।** अतोऽत्र मध्यस्थः पूज्यो भवितुमर्हति।"………

अथ अवश्यमेव माधवसेनः प्रतिमोचयितव्यः। श्रूयतामभिसन्धिः—
मौर्यसचिवं विमुञ्चति यदि पूज्यः संयतं मम श्यालम्।
**मोक्ता माधवसेनं** ततोऽहमपि **बन्धनात्सद्यः॥**
मालविका० १–७

---

पूर्वकम् उपाययोजनया, सर्वदा राज्ञा सावधानेन प्रवर्तनीयम् इति 'पणबन्धमुखान् गुणान्' –रघु० ८–२१ 'स अतिथि षण्णा गुणाना बलाना च विनियोगज्ञ बभूव' –रघु० १७–६७ इत्यादिभिः स्पष्टमुक्तम्। मालविकायामपि 'यातव्यपक्षे स्थितस्य वैदर्भस्य प्रकृत्यमित्रत्व प्रतिकूलचारित्व च स्पष्टमुक्तम्। तथा च चतसृभि. नीतिभि.

राजा—( सरोपम् ) कथं कार्यविनिमयेन मयि व्यवहरति अनात्मज्ञः । वाहतक, प्रकृत्यमित्रः प्रतिकूलचारी च मे वैदर्भः । तद्यातव्यपक्षे स्थितस्य पूर्वं सङ्कल्पितमुन्मूलनाय वीरसेनप्रमुखं दण्डचक्रमाज्ञापय ।

मालविका० १–पृ. १८

इत्यमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् ।
शाम्येत्प्रत्यपकारेण नोपकारेण दुर्जनः ॥ –कुमार० २–४०

---

पड्भि गुणं च सम्पन्ना सनी एव श्री सदुपकारफला भवति इति '–रघु० ९–२७ अत्र सम्यक् ससूचितम् । पणवन्धशब्द सन्धो रूढ ।

# ४ कोशः

**करादिः'**

**कोशेनाश्रयणीयत्वमिति तस्यार्थसङ्ग्रहः ।**
*अम्बुगर्भो हि जीमूतश्चातकैरभिनन्द्यते ॥* -रघु० १७-६०

**प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत् ।**
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥ -रघु० १-१८

**खनिभिः सुषुवे रत्नं क्षेत्रैः सस्यं वनैर्गजान् ।**
दिदेश वेतनं तस्मै रक्षासदृशमेव भूः ॥ -रघु० १७-६६

---

सप्तसु राज्याङ्गेषु कोशस्य चतुर्थम् नाम मध्यम स्थानम्, शरीरे 'प्राणा' इति समूचितम् । देहलीदीपन्यायेन पूर्वस्मिन् अङ्गत्रये उत्तरे च अङ्गत्रये सममेव उपकुर्वन् अय '**कोषविभागः**' राज्याङ्गाना मूलाधारभूतो भवति । भारतीयराजनीतौ राजभि क्रियमाण कोषपूरण सर्वथा साध्यत्वेन अभिमत न आसीत्, इति एतत् एव कालिदासीयवाङ्मयात् ज्ञातु शक्यते । एतदुपबृंहणार्थम् एव 'अतिथे राज्ञ अर्थसङ्ग्रह 'कोशेन आश्रणीयत्वम्' इति हेतुना एव कृत आसीत् (रघु० १७-६०) राज्ञ दिलीपस्य अर्थकामौ धर्मे एव आस्ताम् (रघु० १-२५)' इत्यादिना कालिदासेन अर्थविभागस्य गौणत्व प्रतिपादितम् । सत्सु अपि उपरितनेषु सिद्धान्तभूतेषु वचनेषु, अर्थसङ्ग्रहविषये कोषरक्षणविषय वा नृपतिना निरपेक्षेण, उदासीनेन वा न भाव्यम् इति एतत् प्रदर्शयितुम् एव, 'स अर्थकामाभ्या धर्मं न बबाधे, धर्मेण च अर्थकामौ न बबाधे, कामेन वा अर्थं न बबाधे, (रघु० १७-५७) 'रामचन्द्र धर्मार्थकामेषु समा वृत्ति प्रपेदे, (रघु० १४-२१)' इत्यादीनि विशिष्टसिद्धातप्रतिपादकानि वचनानि कालिदासेन सङ्ग्रथितानि ।

(१) **करादि**—कोषे अर्थसङ्ग्रह तावत् प्रजाभ्य कररूपेण गृह्यमाणेन धनेन एव प्राधान्येन आसीत् इति ' स ताभ्य बलिमग्रहीत् ' (रघु० १-१८) इत्यादिना ज्ञायते । प्रजाभ्य स्वीक्रियमाण करश्च अर्जितवित्तस्य सस्यस्यच षष्ठांशरूपेण आसीव इति 'षष्ठांशमुर्व्या इव रक्षितायाः (रघु० २-६६)' तान्युञ्छषष्ठाङ्कित सैकतानि

ते सेतुवार्तागजबन्धमुख्यैरभ्युच्छ्रिताः कर्मभिरप्यवन्ध्यैः ।
अन्योन्यदेशप्रविभागसीमां वेलां समुद्रा इव न व्यतीयुः ॥ -रघु० १६-२

वत्सस्य होमार्थविधेश्च शेषमृषेरनुज्ञामधिगम्य मातः ।
कथस्यमिच्छामि तवोपभोक्तुं षष्ठांशमुर्व्या इव रक्षितायाः ॥
-रघु० २-६६

तपो रक्षन् स विघ्नेभ्यस्तस्करेभ्यश्च सम्पदः ।
यथास्वमाश्रमैश्चक्रे वर्णैरपि षडंशभाक् ॥ -रघु० १७-६५

निर्वर्त्यते यैर्नियमाभिषेको येभ्यो निवापाञ्जलयः पितॄणाम् ।
तान्युञ्छषष्ठाङ्कितसैकतानि शिवानि वस्तीर्थजलानि कच्चित्
-रघु० ५-८

विदूषकः- नीवारषड्भागमस्माकमुपहरन्त्विति ।
-शाकु० अं० २; पृ० ७६

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तत्फलम् ।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः ॥ -शाकु० २-१३

---

(रघु०५-८), 'नीवारषड्भागमस्माकमुपहरन्तु (शाकु०२-७६)' आरण्यका तपसः षष्ठ भाग ददति (शाकु० २-१३) ' वर्णैरपि षडंशभाक् चक्रे (रघु० १७-६५) इत्यादिवचनं स्फुटीभवति । अतिथिः ' खनिभि रत्नम् अलभत, वनेभ्यः गजान्-गजम्प धन लेभे, क्षेत्रेभ्य सस्य च प्राप (रघु० १७-६६ ) एभि वचन. राज्ञो मूलधनस्य प्राप्तिविषये सामान्यत ज्ञान भवति । मूलधनेषु यथा सस्याना, रत्नानां च अन्तर्भावः तथैव गजानामपि अन्तर्भाव आसीत् इति 'सेतुवार्तागजबन्धमुख्यैः (रघु० १६-२) ' इत्यनेन अपि स्पष्ट ज्ञात भवति । प्राय तपस्विभ्यः नीवारादि-कङ्गरीयाणां धान्याना षष्ठ भागः नृपै ग्राह्यः, इत्येतत् 'उञ्छषष्ठाङ्कित-सैकतानि (रघु० ५-८) नीवारषड्भागमुपहरन्ति (शाकु० २ पृ. ७६) इत्यादिभि. वचनै. ज्ञातु शक्यते । तथाप्येवम् परमधार्मिक, राज्यकर्मणि कुशल, दुष्यन्त 'अक्षय्यम् तप षष्ठ भागम् आरण्यका न ददति (शाकु० २-१३) ' इति उक्त्या तपस्विभ्य. नीवारादिषष्ठांशग्रहणे आत्मन अनुत्सुकता प्रदर्शयति ।

सामन्तेभ्यः अग्रहार–बलिरूप–करादिः[२]

तेषां सदश्वभूयिष्ठा तुङ्गा द्रविणराशयः ।
उपदा विविशुःशश्वन्नोत्सेकाः कोसलेश्वरम् ॥ –रघु० ४-७०

गृहीतप्रतिमुक्तस्य स धर्मविजयी नृपः ।
श्रियं महेन्द्रनाथस्य जहार न तु मेदिनीम् ॥ –रघु० ४-४३

कामरूपेश्वरस्तस्य हेमपीठाधिदेवताम् ।
रत्नपुष्पोपहारेण छायामानर्च पादयोः ॥ –रघु० ४-८४

तमीशः कामरूपाणामत्याखण्डलविक्रमम् ।
भेजे भिन्नकटैर्नागैरन्यानुपरुरोध यैः ॥ –रघु० ४-८३

निर्वंशधनम्[३]

राजाः—( अनुवाच्य ) कथम् । सहमुद्रव्यवहारी सार्थवाहो धनमित्रो नाम नौव्यसने विपन्नः । अनपत्यश्च किल तपस्वी ।

---

२. सामन्तेभ्य. अग्रहारबलिप्राप्ति—इत्यस्मिन् उपप्रकरणे अग्रहाररूपेण, उपदारूपेण, साक्षात् कररूपेण वा, जितेभ्य शत्रुभ्य. स्वसामन्तभाव प्रापितेभ्यश्च यद् द्रव्यादि नृपै. कोशे सञ्चीयते स्म, तद्विषयकाणि वचनानि अत्र सङ्गृहीतानि । यथा गजाना मूलधनत्वम् उपरि प्रतिपादितम्, तथैव अश्वानामपि कररूपेण उपदारूपेण वा स्वीकार तदानीन्तनै राजभि· क्रियते स्म इति एतत् 'सदश्वभूयिष्ठाः तुङ्गा. द्रविणराशय, उपदारूपेण सामन्तेभ्य रघुणा लब्धा. (रघु० ४-४३) ' 'भिन्नकटै. नागै. कामरूपाणाम् ईश. रघु भेजे ( रघु० ४-८३)' इत्याद्युदाहरणं ज्ञायते। 'रघुः महेन्द्रनाथस्य श्रिय जहार, न मेदिनीम् (रघु० ४-४३) ' 'कामरूपेश्वरः रत्नपुष्पोपहारेण छायामानर्च (रघु० ४-८४) ' इत्यादिभि उदाहरणै. साक्षात् धनम् एव स्वीकृतम्, भूभागस्य तु हेतुपुर सरं तेन रघुणा सामन्तेभ्य स्वीकार· न कृतः इति अभिव्यज्यते ।

३. 'निर्धशधनम्' इत्यस्मिन् उपप्रकरणे सन्ततिविच्छेदेन निरवलम्बाना कुलाना सम्पदः राजानम् उपतिष्ठन्ति इत्येतत्—'अनपत्यश्च किल तपस्वी, अतः तस्य अर्थसञ्चयः राजगामी (शाकु० ६, पृ. २९९) ' इत्यनेन ज्ञातु शक्यते ।

**राजगामी तस्यार्थसंचय** इत्येतदमात्येन लिखितम्। बहुधनत्वात् बहुपत्नीकेन तत्रभवता भवितव्यम्। **विचार्यतां यदि काचिदापन्नसत्त्वा तस्य भार्यासु स्यात्।**

-शाकु० ६, पृ. २१९

राजा:—( दीर्घमुष्णं च निःश्वस्य ) एवं भोः **सन्ततिच्छेदनिरवलम्बानां कुलानां मूलपुरुषावसाने सम्पदः परमुपतिष्ठन्ति।** ममाप्यन्ते पुरुवंशश्रीरकाले इवोप्तबीजा भूरेवं वृत्ता।

प्रतिहारी:— देव, इदानीमेव साकेतस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जायास्य श्रूयते।

राजा:—**ननु गर्भः पित्र्यं रिक्थमर्हति। गच्छ। एवममात्यं ब्रूहि।**

-शाकुं० ६, पृ. २२०

**कोशनिरभिलाषित्वम्**[४]

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः।
**अगृध्नुराददे सोऽर्थमसक्तः** सुखमन्वभूत्॥ -रघु० १-२१

स विश्वजितमाजह्रे यज्ञं सर्वस्वदक्षिणम्।
**आदानं हि विसर्गाय सतां** वारिमुचामिव॥ -रघु० ४-८६

---

४. 'कोशनिरभिलाषित्वम्' इत्यस्मिन् उपप्रकरणे विविधैः उपायैः सम्प्राप्ते अर्थे, कृते च कोशसञ्चये राजा तत्र निरपेक्षतानुवृत्तिरेव इष्टा इत्येतत् प्रतिपादयितुं 'स अगृध्नुः सन् अर्थमादत्ते (रघु० १-२१) इत्यत्र उक्तम्। किञ्च सम्पादितस्य कोशस्य विनियोगः दानादिरूपेण, प्रजासु एव पुनः पुनः कर्तव्य इत्येतत् 'सर्वस्वदक्षिणम् (रघु० ४-८६) 'निःशेषविश्राणितकोशजातम्' (रघु० ५-१)' इत्यादिभिः वचनैः ज्ञायते। तथैव 'आदानं हि विसर्गाय' (रघु० ४-८६) इत्यनेन नृपैः सञ्चितानां कोशानां विनियोगः अतीव मार्मिकतया प्रतिपादितः।

# ६ राष्ट्रम्

## प्रदेशः सीमा च[1]

राजरक्षितव्यानि तपोवनानि नाम । –शाकुं० १–२०

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्रीम् ।
एकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ॥
आशंसन्ते सुरयुवतयो बद्धवैरा हि दैत्यैः ।
अस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥ –शाकु० २–१५

सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् ।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ॥ –रघु० १–५

स वेलावप्रवलयां परिखीकृतसागराम् ।
अनन्यशासनामुर्वीं शशासैकपुरीमिव ॥ –रघु० १–३०

पृथिव्याः यः शरणं सः तव समीपे वर्तते । –शाकु० ३, पृ १०६

---

१. प्रदेशः ' स्वाम्यमात्य 'इत्यत्र राष्ट्रशब्देन, पञ्चमेन राज्याङ्गेन विशिष्टः भूभाग एव अभिमत., यत्र राज्ञा स्वकीय राज्य प्रचालनीयम् त भूखण्ड प्रदेश वा लक्ष्यीकृत्य अत्र यानि वचनानि सङ्ग्रथितानि । अनेन एतत् ज्ञातं भवति यत् अन्येषां षण्णामपि राज्याङ्गानाम् अय विभाग [अधिकरणरूपेण आधारभूतः इति । तेषा विजिगीषूणा राज्ञा राज्यस्य प्रदेश तावत् चतु समुद्रवलयाङ्कित इति ' आसमुद्रक्षितीशानाम् (रघु० १–५)' ' वेलावप्रवलया, परिखीकृतसागरा, (रघु० १–३० )' ' उदधिश्यामसीमा धरित्रीम् ( शाकु० २–११ )' ' इत्यादिवचनैं ज्ञातु शक्यते । ' इक्ष्वाकूणामिय भूमि सशैलवनकानना ' इति रामायण समानयन् कालिदास, तपोवनगिरिगुहादीनामपि विषये राज्ञा प्रभुत्वमाविष्करोति । ' अन्योन्यदेशप्रविभागसीमा ते लवादय. न व्यतीयु ( रघु० १६–२ ) ' इत्यनेन परस्पर-

ते सेतुवार्तागजबन्धमुख्यैरभ्युच्छ्रिताः कर्मभिरप्यवन्ध्यैः ।
अन्योन्यदेशप्रविभागसीमां वेलां समुद्रा इव न व्यतीयुः ॥

—रघु० १६-२

## सुराज्य-निर्देशः[2]

तदक्ष कल्याणपरम्पराणां भोक्तारमूर्जस्वलमात्मदेहम् ।
महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः ॥

—रघु० २-५०

कामं नृपाः सन्तु सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसङ्कुलाऽपि ज्योतिष्मती चन्द्रमसैव रात्रिः । —रघु० ६-२२

## नृपविहीनराज्यावस्था[3]

विप्रोषितकुमारं तद् राज्यमस्तमितेश्वरम् ।
रन्ध्रान्वेषणदक्षाणां द्विषामामिषतां ययौ ॥ —रघु० १२-११

---

सहकार्येण राज्यानि प्रशासता राजा, स्वस्वसीमापरिपालने अन्यसीमानतिक्रमे च प्रवृत्तिरयनेन सामान्यानां नृपाणां परिमितः भूभागः वर्णितो भवति ।

२. 'सुराज्यनिर्देशः' — 'राष्ट्र'इत्यस्मिन् प्रकरणे विविधानां राज्यशासनसंस्थानां कल्पना का आसन् इत्येतत्प्रदर्शकानि वचनानि संगृह्यन्ते । तत्र सुराज्यकल्पनामधिकृत्य 'ऋद्धं राज्यम् ऐन्द्रम् पदम् आहुः' (रघु० २-५०)' 'अन्ये नृपाः कामं सन्तु, भूमिम् अनेन राज्ञा राजन्वतीम् आहुः, (रघु० ६-२२) इति वचनेन कालिदासीयवाङ्मये यः सुराज्यकल्पनायाः आविष्कारः भवति, स मार्गो भवति ।

३. नृपविहीनराज्यावस्था—कौटिल्य शास्त्रम् सर्वेषाम् अपि नीतिविदाम् मान्यत्वेन अभिमतः अराज्यवादः तस्य दर्शनेन, कालिदासीयवाङ्मये कुत्रापि उपलब्धो न भवति, किन्तु शासितारं अनुपस्थिते राष्ट्रस्य का वा अवस्था भवति इत्ये-

स्वर्गामिनस्तस्य तमैकमत्यादमात्यवर्गः कुलतन्तुमेकम् ।
अनाथदीनाः प्रकृतीरवेक्ष्य साकेतनाथं विधिवच्चकार ॥

–रघु० १८–३६

द्वैराज्यकल्पना[४]

राजा— मौद्गल्य ! तत्रभवतोर्भ्रात्रोर्यज्ञसेनमाधवसेनयोर्द्वैराज्यमवस्थापयितुकामोऽस्मि ।

तौ पृथक् वरदाकूले शिष्टामुत्तरदक्षिणे ।
नक्तंदिवं विभज्योभौ शीतोष्णकिरणाविव ॥ –मालविका० ५–१३

कञ्चुकी— विजयतां देवः । अमात्यो विज्ञापयति । अहो कल्याणी देवस्य बुद्धिः । मन्त्रिपरिषदोऽप्येवमेव दर्शनम् । कुतः–

द्विधा विभक्तां श्रियमुद्वहन्तौ धुरं सदश्वाविव सङ्गृहीतुः ।
तौ स्थास्यतस्ते नृपती निदेशे परस्परावग्रहनिर्विकारौ ॥

–मालविका० ५–१४

---

तत् अस्मिन् प्रकरणे उध्दृतं 'अस्तमितेश्वर राज्य द्विपामामिपता ययौ ( रघु० १२–११ )' 'अनाथदीना प्रकृतीरवेक्ष्य ( रघु० १८–३६ )' इत्यादिवचनं सम्यक् ज्ञायते ।

४ द्वैराज्यकल्पना—इत्यस्मिन् प्रकरणे शासनसंस्थादृष्ट्या अत्यन्तं महत्वपूर्णानि वचनानि सङ्ग्रथितानि । मालविकाग्निमित्रे यज्ञसेनमाधवसेनयोः द्वैराज्यम् अवस्थापयितुकामेन राज्ञा अग्निमित्रेण स्पष्टम् उक्त यत्–'वरदाकूले तौ उत्तरेदक्षिणे पृथक् शिष्टाम्' इति ( मालविका० ५–१३ ) । मन्त्रिभिरपि तत् सम्यक् अनुमत यत्– 'द्विधा विभक्ता श्रियम् उद्वहन्तौ तौ परस्परप्रदेशविपये निरभिलाषौ सन्तौ शासकत्वेन सदश्वौ धुरमिव स्थास्यत' इति (मालविका० ५–१४ ) रघुवंशे पञ्चदशे सर्गे अपि 'लक्ष्मण आत्मसम्भवौ अङ्गद–चन्द्रकेतू कारापथप्रदेशस्य अधिपती चकार ( रघु० १५–३६ )' इत्यनेन द्वैराज्यकल्पनाया न स्पष्टमाविष्करणम् पर ससूचनं वर्तते एव ।

अङ्गदं चन्द्रकेतुं च लक्ष्मणोऽप्यात्मसम्भवौ ।
शासनाद्रघुनाथस्य चक्रे कारापथेश्वरौ ॥ -रघु० १५-३६

धर्मप्रधानराज्यसंस्था[५]

स्थित्यै दण्डयतो दण्ड्यान्परिणेतुः प्रसूतये ।
**अप्यर्थकामौ तस्यास्तां धर्म एव** मनीषिण ॥ -रघु० १-२५

यतिपार्थिवलिङ्गधारिणौ ददृशाते रघुराघवौ जनैः ।
**अपवर्गमहोदयार्थयोर्भुवमंशाविव धर्मयोर्गती** ॥ -रघु० ८-१६

**दुदोह गां स यज्ञाय** सस्याय मघवा दिवम् ।
सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥ -रघु० १-२६

राजा—मूर्ख, अन्यद्भागधेयमेतेषां रक्षणे निपतति, **यद्रत्नराशीनपि विहायाभिनन्द्यम्** । पश्य,

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तत्फलम् ।
**तपःषड्भागमक्षय्यं** ददत्यारण्यका हि नः । -शाकु० २-१३

पुरुषार्थेषु समानता[६]

पितुर्नियोगाद्वनवासमेवं निस्तीर्य रामः प्रतिपन्नराज्यः ।
**धर्मार्थकामेषु समां प्रपेदे** यथा तथैवावरजेषु वृत्तिम् ॥ -रघु० १४-२१

---

५ धर्मप्रधानराज्यसंस्था--चतुर्षु पुरुषार्थेषु प्रथमपुरुषार्थस्य शासनसंस्थायां प्राधान्यं बहुभि उदाहरणैः ज्ञातुं शक्यते । 'दिलीपः यज्ञाय गां दुदोह ( रघु० १-२६ )' 'दिलीपस्य अर्थकामौ धर्म एव आस्ताम् (रघु० १-२५)' 'तपस्विनां रक्षणे अन्यद्भागधेयं यद्रत्नराशीनपि विहाय अभिनन्द्यम्' (शाकु० १-२३) इत्यादिभिः उदाहरणैः राष्ट्रस्य रक्षणं प्राधान्येन परम्परागतेन धर्मेणैव कर्तव्यम् इति तैर्बोध्यते ।

६ पुरुषार्थेषु समानता–यथा धर्मस्यैव प्राधान्यं शासनसंस्थायां कालिदासेन उक्तम्, तथैव चतुर्णां पुरुषार्थानां समानता अपि प्रसङ्गविशेषेषु तेन प्रतिपादिता

**न** धर्ममर्थकामाभ्यां बबाधे न च तेन तौ ।
नार्थं कामेन कामं वा सोऽर्थेन **सदृशस्त्रिषु** ॥ –रघु० १७-५७

स चतुर्धा बभौ व्यस्तः प्रसवः पृथिवीपतेः ।
**धर्मार्थकाममोक्षाणामवतार इवाङ्गवान्** ॥ –रघु० १०-८४

## राज्य-सुखकल्पना[७]

राजा — सर्वः प्रार्थितमर्थमधिगम्य सुखी सम्पद्यते जन्तुः । **राज्ञां तु चरितार्थता दुःखोत्तरैव** ।

औत्सुक्यमात्रमवसाययति प्रतिष्ठा ।
क्लिश्नाति लब्धपरिपालनवृत्तिरेवम् ॥
नातिश्रमापनयनाय न च श्रमाय ।
**राज्यं स्वहस्तधृतदण्डमिवातपत्रम्** ॥ –शाकु० ५, पृ. १५७

---

'धर्मार्थकामेषु रामचन्द्र समा वृत्ति प्रपेदे ( रघु० १४–२१ )' 'अतिथि त्रिषु अपि धर्मार्थकामरूपेषु पुरुषार्थेषु समान सन् राज्य शशास (रघु १७–५७)इत्यादिभि पुरुषार्थानाम् समानस्थानम् शासनसस्याविषयेऽपि साम्यम् च स्पष्टम् उक्त भवति ।

७ **राज्यसुखकल्पना**--इति प्रकरण केवल राज्यस्य सम्यक्स्वरूपाविष्करणाय कालिदासेन उपवर्णित शाकुन्तले वर्तमान श्लोकम् उपनिबद्धुम् एव अत्र उदाहृतम् । राष्ट्रस्य शासने क्रियमाणे राज्ञा तु सुख नास्ति एव, प्रत्युत दु खप्रधानमेव तत्, इति उपवर्ण्य कालिदास पुन आह,–राज्य स्वहस्तधृतातपत्रमिव अतिश्रमापनयनाय न भवति तथा श्रमाय अपि न भवति । इति । शाकु० ५, पृ १५७

# ६ दुर्गाः

दुर्ग–विशेषाः¹

दुर्गाणि दुर्ग्रहाण्यासंस्तस्य रोद्धुरपि द्विषाम् ।
न हि सिंहो गजास्कन्दी भयाद्गिरिगुहाशयः ॥ –रघु० १७-५२

अस्ति देव्या वर्णावरो भ्राता वीरसेनो नाम ।
स भर्त्रा अन्तपालदुर्गे नर्मदाकूले स्थापितः ॥ –मालविका० १ पृ २२

---

अस्मिन् प्रकरणे राज्ञा प्राकारादिवेष्टितानां विशिष्टानां निवासस्थानानाम् धन्व-दुर्ग-महीदुर्ग-अब्दुर्ग-गिरिदुर्गादीनां वर्णनम् सङ्ग्रथितं भवेत्। तथा च मनुः–'धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्ष्यमेव वा। नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत्पुरम् ॥' इति। तथैव रक्षणोपायत्वेन सेनादिनिवेशार्थं सीमादौ स्थापितानां सुरक्षितानाम् दुर्गाणां च वर्णनम् आवश्यकम्। परम् कालिदासीयवाङ्मये एतादृशानां दुर्गाणां वर्णनपराणि वचनानि अतीव अल्पानि उपलभ्यन्ते। तृतीयः प्रकारः अस्माभिः अत्र सङ्कलितः स 'राजधानी'वर्णनात्मकः। राजधानीविषये सामान्यतः तदानीकाले या कल्पना आसीत्, राजधान्यां विद्यमानानाम् ऋद्धापणानाम् राजपथानाम्, विहारोपवनानाम् विलासिनीनाम् अभिसारिकादीनाम् च कीदृक् व्यवहारः आसीत् इत्येतत्प्रदर्शकानि वचनानि सङ्गृह्यन्ते। तानि च बहुत्र वैपुल्येन सम्पादयितुं शक्यन्ते, तथापि केवल सामान्यज्ञानाय तेषाम् अत्र निर्देशः।

१ 'दुर्गाः'—इत्यस्मिन् उपप्रकरणे धन्वादिषड्विधदुर्गाणाम् उल्लेखपरम् एकम् वचनम् वर्तते। स्वयं शत्रून् रोद्धुं समर्थस्यापि राज्ञः अतिथेः दुर्गाणि परैः दुर्धर्षाणि आसन् इति वर्णनेन राज्ञां दुर्गस्य अत्यन्तम् आवश्यकता सूच्यते। अर्थान्तरन्यासेन एव कालिदासेन एतत् स्पष्टीकृतम् यत्–गजास्कन्दनसमर्थस्य अपि सिंहस्य गिरिगुहासु निवासः न भीत्या भवति, किन्तु स्वभावात् एव इति (रघु० १७–५२)। मालविकायां प्रथमेऽङ्के 'अन्तपालदुर्ग'इति उल्लेखः उपलभ्यते। अन्तपालो नाम स्वस्य राज्यान्तस्य च सीमाविभागः, तत्र महता प्रयत्नेन स्थापितं दुर्गं अन्तपाल-दुर्गः। एतेन स्वराज्यसीमासंरक्षणार्थं तत्र तत्र सीमाविभागेषु दुर्गाणां संस्थापनं क्रियते स्म इत्येतत् स्पष्टं प्रतिपादितं भवति।

## राजधानीवर्णनम्[२]

तां शिल्पिसङ्घाः प्रभुणा नियुक्ताः तथागतां सम्भृतसाधनत्वात्
पुरं नवीचक्रुरपां विसर्गान्मेघा निदाघग्लपितामिवोर्वीम् ॥
ततः सपर्यां सपशूपहारां पुरः परार्ध्यप्रतिमागृहायाः ।
उपोषितैर्वास्तुविधानविद्भिः निर्वर्तयामास रघुप्रवीरः ॥
तस्याः स राजोपपदं निशान्तं कामीव कान्ताहृदयं प्रविश्य ।
यथार्हमन्यैरनुजीविलोकं सम्भावयामास यथाप्रधानम् ॥ –रघु० १६ ३८–४०

समीरक्षोहरिभिः ससैन्यस्तूर्यस्वनानन्दितपौरवर्गः ।
विवेश सौधोद्गतलाजवर्षामुत्तोरणामन्वयराजधानीम् ॥ रघु० १४–१०

वेश्मानि रामः परिबर्हवन्ति विश्राण्य सौहार्दनिधिः सुहृद्भ्यः ।
बाष्पायमाणो बलिमन्निकेतमालेख्यशेषस्य पितुर्विवेश । –रघु० १४–१५

ऋद्धापणं राजपथं स पश्यन् विगाह्यमानां सरयूं च नौभिः ।
विलासिभिश्चाध्युषितानि पौरैः पुरोपकण्ठोपवनानि रेमे ॥
–रघु० १४–३०

या सैकतोत्सङ्गसुखोचितानां प्राज्यैः पयोभिः परिवर्धितानाम् ।
सामान्यधात्रीमिव मानसं मे सम्भावयत्युत्तरकोसलानाम् ॥
सेयं मदीया जननीव तेन मान्येन राज्ञा सरयूर्वियुक्ता ।
दूरे वसन्तं शिशिरानिलैर्मां तरङ्गहस्तैरुपगूहतीव ॥ –रघु० १३–६२, ६३

---

२ 'राजधानी' इत्यस्मिन् उपप्रकरणे राज्ञां निवासस्थानभूताया नगर्या वर्णनपराणि वचनानि सङ्गृह्यन्ते। अस्मिन् उपप्रकरणे नवीनाम् एव कुशेन निर्मिताम् राजधानीम प्रथमं उपवर्ण्य, तदनन्तरं राज्ञः अभावे नगर्या अवस्था कीदृशी भवति इत्येतत्प्रदर्शकानि वचनानि अत्र सङ्कलितानि। नवराजधानीनिर्मित्यवसरे शिल्पिसङ्घाना चातुर्यम्, वास्तु विधान विदां विज्ञान च चातुर्येण तैस्तैः राजभि उपयोगाय प्रकल्पितं दृश्यते। रचनाविशेषैः सौन्दर्यविस्तारैः शिल्पिभिः ता ता राजधान्यः नवीकृता, तथैव राज्ञां संरक्षणदृष्ट्या अपि ते ते विशेषाः तत्र तत्र

तमब्रवीत्सा गुरुणानवद्या या नीतपौरा स्वपदोन्मुखेन ।
तस्याः पुरः सम्प्रति वीतनाथां जानीहि राजन्नधिदेवतां माम् ॥
वस्वौकसारामभिभूय साहं सौराज्यबद्धोत्सवया विभूत्या ।
समग्रशक्तौ त्वयि सूर्यवंश्ये सति प्रपन्ना करुणामवस्थाम् ॥
—रघु० १६–९, १०

विशीर्णतल्पाट्टशतो निवेशः पर्यस्तशीलः प्रभुणा विना मे ।
निडम्बयत्यस्तनिमग्नसूर्यं दिनान्तमुग्रानिलभिन्नमेघम् ॥ —रघु० १६–११

निशासु भास्वत्कलनूपुराणां यः सञ्चरोऽभूदभिसारिकाणाम् ।
नदन्मुखोल्का विचितामिषाभिः स वाह्यते राजपथः शिवाभिः ॥
—रघु० १६–१२

आस्फालितं यत्प्रमदाकराग्रैर्मृदङ्गधीरध्वनिमन्वगच्छत् ।
वन्यैरिदानीं महिषैस्तदम्भः शृङ्गाहतं क्रोशति दीर्घिकाणाम् ॥
—रघु० १६–१३

वृक्षेशया यष्टिनिवासभङ्गान् मृदङ्गशब्दापगमादलास्याः ।
प्राप्ता दवोल्काहतशेषबर्हाः क्रीडामयूरा वनबर्हिणत्वम् ॥
सोपानमार्गेषु च येषु रामा निक्षिप्तवत्यश्चरणान्सरागान् ।
सद्यो हतन्यङ्कुभिरस्रदिग्धं व्याघ्रैः पदं तेषु निधीयते मे ॥
चित्रद्विपाः पद्मवनावतीर्णाः करेणुभिर्दत्तमृणालभङ्गाः ।
नखाङ्कुशाघातविभिन्नकुम्भाः संरब्धसिंहप्रहृतं वहन्ति ॥

---

प्रत्यापिता । 'हृष्टापणं राजपथं [illegible] विगाह्यमानां सरयूं, विमानैरभि पौरै-
रभ्युपेतानि उपवनानि पश्यन् रामः रेमे । (रघु० १४–३०) [illegible]
राजधान्या वर्णनं यथा [illegible]
[illegible] (रघु० १३ ६२) [illegible] (रघु० १०–६३)
इत्यादिवर्णनं स्वराज्यान्तर्गतं [illegible] पार्थिवस्य, न वा [illegible]
आदरः, किन्तु [illegible] रघुवंशीयानां राज्ञाम्-

**स्तम्भेषु** योषित्प्रतियातनानामुत्क्रान्तवर्णक्रमधूसराणाम् ।
स्तनोत्तरीयाणि भवन्ति सङ्गान्निर्मोकपट्टाः फणिभिर्विमुक्ताः ॥
कालान्तरश्यामसुधेषु नक्तमितस्ततो रूढतृणाङ्कुरेषु ।
त एव मुक्तागुणशुद्धयोऽपि **हर्म्येषु** मूर्च्छन्ति न चन्द्रपादाः ॥
आवर्ज्य शाखाः सदयं च यासां पुष्पाण्युपात्तानि विलासिनीभिः ।
वन्यैः पुलिन्दैरिव वानरैस्ताः क्लिश्यन्त **उद्यानलता** मदीयाः ॥
रात्रावनाविष्कृतदीपभासः कान्तामुखश्रीवियुता दिवापि ।
तिरस्क्रियन्ते कृमितन्तुजालैर्विच्छिन्नधूमप्रसरा **गवाक्षाः** ॥
बलिक्रियावर्जितसैकतानि स्नानीयसंसर्गमनाप्नुवन्ति ।
उपान्तवानीरगृहाणि दृष्ट्वा शून्यानि दूये **सरयूजलानि** ॥
-रघु० १६-१३....२१

तदर्हसीमां वसतिं विसृज्य मामभ्युपैतुं **कुलराजधानीम्** ।
हित्वा तनुं कारणमानुषीं तां यथा गुरुस्ते परमात्ममूर्तिम् ॥ -रघु० १६-२२

---

मानसिकी प्रवृत्ति 'इक्ष्वाकूणामिय भूमि **सशैलवनकानना**' इति वाल्मीकि-वचनम् अनुसरति ।

निःसारितमूर्ते देवगृहस्य इव राज्ञाम् अभावे राजधानीषु अभिसारिकाणां स्थाने शिवानां प्रवेश, प्रमदाकराग्रास्फालितासु दीर्घिकासु महिषाणाम् अवगाहः, क्रीडामयूराणां स्थाने वनबर्हिण, प्रासादेषु अभिरामाणाम् रमणीनां लाक्षारसार्द्राणां पदानां स्थाने व्याघ्रपदानां सन्निवेश, प्रासादस्तम्भेषु योषित्प्रतिमानां स्तनोत्तराणि नाम फणिनां निर्मोकपट्टा, विलासिनीभि सदयम् आवर्जितासु लतासु वन्यानां वानराणां निवास, इत्यादिभि विविधै विस्तृतैश्च वर्णनैः राज्ञाम् अभावे अवस्था-भेद समीचीनतया ज्ञायते ।

# ७ बलम्

सेनाविभागाः[1]

प्रतापोऽग्रे ततः शब्दः परागस्तदन्तरम् ।
ययौ पश्चाद्रथादीति चतुःस्कन्धेव सा चमूः ॥ —रघु० ४-३०

स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः ।
षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥ —रघु० ४-२६

तेनोत्तीर्य पथा लङ्कां रोधयामास पिङ्गलैः ।
द्वितीयं हेमप्राकारं कुर्वद्भिरिव वानरैः ॥ —रघु० १२-७१

स सेतुं बन्धयामास प्लवगैर्लवणाम्भसि ।
रसातलादिवोन्मग्नं शेषं स्वप्नाय शार्ङ्गिणः ॥ —रघु० १२-७०

प्रतिजग्राह कालिङ्गस्तमस्त्रैर्गजसाधनः ।
पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ॥ —रघु० ४-४०

---

अस्मिन् प्रकरणे सेनाविभागाना निर्देशपराणि तथा युद्धविषयकाणि विविधप्रकाराणि वचनानि सङ्गृह्यन्ते । अत्र यथा युद्धपराणि वचनानि सङ्ग्रथितानि तथा धर्म्ययुद्धकल्पनापराणि, शस्त्रविशेषवर्णनपराणि, ध्वजकेतुनिर्देशपराणि, विजयान्ते मधुपानादिरूपाणि वचनानि सङ्कलितानि । सप्तसु अङ्गेषु अन्तिमः अयं विभागः ।

१ 'सेनाविभाग' इत्यस्मिन् उपप्रकरणे चतुःस्कन्धाया सेनाया वर्णनम् कृतम् । रघु० (४-३०) अत्र 'रथादि' इत्यनेन रथिका, सादिन, पदातय, गजा इति चतुर्विधम् बलम् उक्तम् भवति । द्वितीयश्लोके रघु दिग्जिगीषया 'षड्विध' बलम् आदाय प्रतस्थे (रघु० ४-२६) इत्यत्र षड्विध बलम् इत्यस्य 'मौलभृत्यादीनि बलानि' इत्यर्थं । तथा चोक्तम् ' मौल भृत्य सुहृच्छ्रेणीद्विषदाटविक बलम्' इति । षड्विधबलेषु अथवा चतुरङ्गसेनासु यद्यपि जलतरण-

ततो गौरीगुरुं शैलमारुरोहाश्वसाधनः ।
वर्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः ॥ –रघु० ४–७१

तत्र जन्यं रघोर्घोरं पार्वतीयैर्गणैरभूत् ।
नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ॥ –रघु० ४–७७

वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान् ।
निचखान जयस्तम्भान् गङ्गास्रोतोऽन्तरेषु सः ॥ –रघु० ४–३६

स तीर्त्वा कपिशां सैन्यैर्बद्धद्विरदसेतुभिः ।
उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ । –रघु० ४–३८

सङ्ग्रामस्तुमुलस्तस्य पाश्चात्त्यैरश्वसाधनैः ।
शार्ङ्गकूजितविज्ञेयप्रतियोधे रजस्यभूत् ॥ –रघु० ४–६२

सर्वैर्बलाङ्गैर्द्विरदप्रधानैः सर्वायुधैः कङ्कटभेदिभिश्च ।
सर्वप्रयत्नेन च भूमिपालास्तस्मिन् प्रजहुर्युधि सर्व एव ॥ –रघु० ७–५९

सा केतुमालोपवना बृहद्भिर्विहारशैलानुगतेव नागैः ।
सेना रथोदारगृहा प्रयाणे तस्याभवज्जङ्गमराजधानी ॥
–रघु० १६–२६

---

साधनाना नौकादीनाम् साक्षात् अन्तर्भाव न भवति, तथाऽपि ' रघुः नौसाधनोद्यतान् वङ्गान् उत्खाय ' (रघु० ४–३६), इत्यत्र 'जलतरणसाधनेन सम्पन्नान् शत्रून् अजयत् ' इति स्पष्टम् उक्तम् । तत्र रघो समीपे यद्यपि नौकादीनि जलतरण-साधनानि न आसन्, तथापि बद्धद्विरदसेतुभि सैन्यै स कपिशाम् अतरत् इत्युक्तत्वात् (रघु०४–३८) सैनिकानाम् जलतरणे, गजानाम् अत्यन्त साहाय्यम् आसीत् इति स्पष्टं ज्ञायते । एतदेव च चतुर्विधसेनायाम् गजाना प्रथमस्थानस्य कारणम् । अत एव तत्र तत्र उक्तम् यत् 'सर्वै बलाङ्गै द्विरदप्रधानै (रघु० ७–५९) इति । रथोदारगृहा सेना प्रयाणे जङ्गमराजधानी अभवत् (रघु० १६–२६) इत्यनेन दिग्विजययात्रायाम् रथाना निवासस्थानसदृशः उपयोग ज्ञात भवति । वेलातटेषु सैनिकाश्वानाम् सततम् अवस्थानविधानात् "त राजान 'व्युषिताश्वम्' आहु " (रघु० १८–२३) इति स्पष्टमेव समीचीनतया उक्तम् । अश्वसाधनः रघुः गौरीगुरुं शैलम् आरुरोह, तत्र

तस्यावसाने हरिदश्वधामा पित्र्यं प्रपेदे पदमश्विरूपः ।
**वेलातटेषूषितसैनिकाश्वं** पुराविदो यं व्युषिताश्वमाहुः ॥ -रघु० १८-२३

स **बलानां** गुणाना च **षण्णां** षण्मुखविक्रमः ।
बभूव विनियोगज्ञः साधनीयेषु वस्तुषु ॥ -रघु० १७-६७

## विजयान्ते मधुपानम्[2]

ताम्बूलीना दलैस्तत्र रचिताः पानभूमयः ।
**नारिकेलासवं योधा** शात्रव च पपुर्यशः ॥ -रघु० ४-४२

विनयन्ते स्म तद्योधा **मधुभिर्विजयश्रमम्** ।
आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ॥ -रघु० ४-६५

## अन्तःपुररक्षणम्[3]

**तस्याः स रक्षार्थमनल्पयोधमादिश्य** पित्र्यं **सचिवं** कुमारः ।
प्रत्यग्रहीत्पार्थिववाहिनीं ता भागीरथीं शोण इवोत्तरङ्गः ॥ -रघु० ७-३६

---

तस्य पार्वतीयैं गणैं घोर युद्धम् अभूत् (रघु० ४-७७) इत्यनेन तस्मिन् काले अपि गिरिगुहादिषु निवसता वन्याना युद्धपद्धति अन्यादृशी एव आसीत् इति 'नाराचोत्क्षेपणीयाश्मनिष्पेषोत्पतितानलम्' इत्यनेन ज्ञायते ।

अश्वा तदाऽपि पाश्चात्यदेशात् सङ्ग्राह्या आसन् इयेतत् पाश्चात्यैं अश्वसाधनै (रघु० ८-६२) इत्यनेन सम्यक् ज्ञायत । पर्वतादिषु च तेषामत्यन्तमुपयोग, इत्येतद् 'ततो गौरीगुरुशैलमारुरोहाश्वसाधन' (रघु० ४-७१) इत्यत्र स्पष्टमुक्तम् ।

२ '**विजयान्ते मधुपानम्**' इत्यस्मिन् उपप्रकरणे नारिकेलासवपानस्य, द्राक्षामधुपानस्य च वर्णन वतत, युद्ध यः श्रमातिशय अनुभूयते तत्परिहाराय मधुपानम् अथवा आसवपानम् तं विजतृभिः योद्धृभि कृतम् तेन च विजयोत्सव सं समानित इति अत्र वर्णितम् ।

३ '**अन्त पुररक्षणम्**'—इत्यस्मिन् उपप्रकरणे साक्षात् युद्धे प्रारब्धे स्वस्त्रीणा बालकादीना च सरक्षणाय का अपि योजना कर्तव्या इति पद्धति तदानी-

उदायुधानापततांस्तान् दृप्तान्प्रेक्ष्य राघवः ।
निदधे विजयाशंसां चापे सीतां च लक्ष्मणे ॥ -रघु० १२-४४

धर्मयुद्ध-कल्पना[४]

पत्तिः पदातिं रथिनं रथेशस्तुरङ्गसादी तुरगाधिरूढम् ।
यन्ता गजस्याभ्यपतद्गजस्थं तुल्यप्रतिद्वन्द्वि बभूव युद्धम् ॥ -रघु० ७-३७

पूर्वं प्रहर्ता न जघान भूयः प्रतिप्रहाराक्षममश्वसादी ।
तुरङ्गमस्कन्धनिषण्णदेहं प्रत्याश्वसन्तं रिपुमाचकाङ्क्ष ॥ -रघु० ७-४७

राम पदातिमालोक्य लङ्केशं च वरूथिनम् ।
हरियुग्यं रथं तस्मै प्रणिधाय पुरन्दरः ॥
तमाधूतध्वजपटं व्योमगङ्गोर्मिवायुभिः ।
देवसूतभुजालम्बी जैत्रमध्यास्त राघवः ॥ -रघु० १२, ८४-८५

---

तना दृश्यते। अजेन इन्दुमत्या रक्षणार्थं प्रधान सचिव स्थापयित्वा अनन्तर युद्धं प्रारब्धम्—' पित्र्य सचिवम् इन्दुमत्या रक्षार्थमादिश्य ' (-रघु० ७-३६), तथैव रामः अपि दण्डकारण्ये रक्षोभि युद्धप्रारम्भात् प्राक् सीताया सरक्षणार्थं लक्ष्मणम् न्यवेशयत् ( रघु० १२-४४ )।

४ 'धर्म्ययुद्धकल्पना'— समरे तुल्यप्रतिद्वन्द्वि युद्धम् इति प्रथम वर्ण्यते। तथा च प्रथमम् एव उक्तम्—' पत्ति पदातिना सह एव, रथी रथेशेन एव सह, इत्यादि ( रघु० ७-३७ ) '। 'प्रतिप्रहाराक्षमम् अन्यम् शत्रुम् भूय न जघान (रघु० ७-४७) ' इत्यनेन तुल्यप्रतिद्वन्द्वित्वे एव युद्धम् इति धर्म्ययुद्धस्य स्वरूपम् सम्यक् आविष्कृत भवति। ' राम पदातिनम् आलोक्य, लङ्केश च रथिनम् आलोक्य इन्द्र रामाय रथ प्रेषितवान्। राम च जैत्र रथम् अध्यास्त (रघु० १२-८४,-८५) ' इत्यनेन अपि धर्म्ययुद्धकल्पनाया आविष्कार ।

अस्त्राणि[५]

संमोहनं नाम सखे ममास्त्रं प्रयोगसंहारविभक्तमन्त्रम् ।
गान्धर्वमादत्स्व यतः प्रयोक्तुः न चारिहिंसा विजयश्च हस्ते ॥ -रघु० ५-५७

प्रियंवदात्प्राप्तमसौ कुमारः प्रायुङ्क्त राजस्वधिराजसूनुः ।
गान्धर्वमस्त्रं कुसुमास्त्रकान्तः प्रस्वापनं स्वप्ननिवृत्तलौल्यः ॥
-रघु० ७-६१

इतः परानर्भकहार्यशस्त्रान् वैदर्भि पश्यानुमता मयासि ।
एवंविधेनाहवचेष्टितेन त्वं प्रार्थ्यसे हस्तगता ममैभिः ॥ -रघु० ७-६७

राजा— मोस्तिरस्करिणीगर्वित, मदीयं शस्त्रं त्वां द्रक्ष्यति । एष तमिषुं सन्दधे ।
यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षति च द्विजम् ।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥ -शाकु० ६-२८

ततः स कृत्वा धनुराततज्यं धनुर्धरः कोपविलोहिताक्षः ।
गारुत्मतं तीरगतस्तरस्वी भुजङ्गनाशाय समाददेऽस्त्रम् ॥
-रघु० १६-७७

विभूषणप्रत्युपहारहस्तमुपस्थितं वीक्ष्य विशाम्पतिस्तम् ।
सौपर्णमस्त्रं प्रतिसञ्जहार प्रह्वेष्वनिर्बन्धरुषो हि सन्तः ॥ -रघु० १६-८०

---

५. 'अस्त्राणि' इत्यस्मिन् उपप्रकरणे अस्त्रविद्याया प्राप्ति गुरा सकाशात् कथ वा भवति, अस्त्रस्य प्रयोगे संहारे च पृथङ्मन्त्राः वा कथम् उपयुज्यन्ते इत्येतत्-प्रदर्शकानि वचनानि अत्र निर्दिश्यन्ते ।

(१) गान्धर्वास्त्रम्—(रघु० ५-५७, ७-६१),(२) सौपर्णास्त्रम् (रघु० १६-८०), (३) गारुत्मतास्त्रम्— (रघु० १६-७७), (४) ऐन्द्रास्त्रम् (रघु० १५-२२), (५) अस्त्रयन्त्रतम्- (नागपाश) (रघु० १२-७६), (६) ब्राह्मास्त्रम्- (रघु० १२-९७) (७) इषीकास्त्रम्- (रघु० १२-२३), (८)

**ऐन्द्रमस्त्रमुपादाय** शत्रुघ्नेन स ताडितः ।
सिकतात्वादपि परां प्रपेदे परमाणुताम् ॥ –रघु० १५–२२

तस्मिन्नास्य**दिषीकास्त्रं** रामो रामावबोधितः ।
आत्मानं मुमुचे तस्मादेकनेत्रव्ययेन सः ॥ –रघु० १२–२३

**गरुडापातविश्लिष्टमेघनादास्त्रबन्धनः** ।
दाशरथ्योः क्षणक्लेशः स्वप्नवृत्त इवाभवत् ॥ –रघु० १२–७६

अमोघं सन्दधे चास्मै धनुष्येकधनुर्धरः ।
**ब्राह्मस्त्रं** प्रियाशोकशल्यनिष्कर्षणौषधम् । –रघु० १२–९७

तद्व्योम्नि शतधा भिन्नं ददृशे दीप्तिमन्मुखम् ।
वपुर्महोरगस्येव करालफणमण्डलम् ॥ –रघु० १२–९८

**तेन मन्त्रप्रयुक्तेन** निमेषार्धादपातयत् ।
स रावणशिरःपङ्क्तिमज्ञातव्रणवेदनाम् ॥ –रघु० १२–९९

**अस्त्रं हरादाप्तवता** दुरापं येनेन्द्रलोकावजयाय दृप्तः ।
पुरा जनस्थानविमर्दशङ्की सन्धाय लङ्काधिपतिः प्रतस्थे ॥
–रघु० ६–६२

**सोऽस्त्रमुग्रजवमस्त्रकोविदः** सन्दधे धनुषि **वायुदैवतम्** ।
तेन शैलगुरुमप्यपातयत्पाण्डुपत्रमिव ताडकासुतम् ॥ –रघु० ११–२८

---

**वायुदेवतास्त्रम्**– (रघु० ११–२८) इति, *प्राधान्येन एतानि अस्त्राणि अत्र सङ्-*गृहीतानि । तत्तेषाम् अस्त्राणाम् प्रभावाः च अत्र विस्तरेण वर्णिताः सुलभतया ज्ञातुं शक्यन्ते । एकस्य अस्त्रस्य प्रयोगात् अनन्तरम् तत्परिहाराय अन्यस्य अस्त्रस्य उपयोगः कृतः इत्येतत् उपरि निर्दिष्टे वचने. ज्ञातु शक्यते । एषु सर्वेषु अपि अस्त्रेषु **'ब्राह्मास्त्र'**स्य निर्देशः अमोघास्त्रम् इति कृतः तदेव च प्रधानम्– (रघु० १२–९७) इति अत्र ज्ञायते । शस्त्रप्रभावापेक्षया च अस्त्रप्रभावः अधिकतरः इति उपरितनवर्णनेन ज्ञायते।

शस्त्रविशेषाः तत्प्रभावश्च [६]

भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव ॥ रघु० ४-६३

अयःशङ्कुचितां रक्षः शतघ्नीमथ शत्रवे ।
हृतां वैवस्वतस्येव कूटशाल्मलिमक्षिपत् ॥ -रघु० १२-९५

राघवो रथमप्राप्तां तामाशां च सुरद्विषाम् ।
अर्धचन्द्रमुखैर्बाणैश्चिच्छेद कदलीसुखम् ॥ -रघु० १२-९६

अपशूलं तमासाद्य लवणं लक्ष्मणानुजः ।
रुरोध संमुखीनो हि जयो रन्ध्रप्रहारिणाम् ॥ -रघु० १५-१७

मातलिस्तस्य माहेन्द्रमामुमोच तनुच्छदम् ।
यत्रोत्पलदलक्लैब्यमस्त्राण्यापुः सुरद्विषाम् ॥ -रघु० १२-८६

साक्षात् सङ्ग्रामवर्णनम् [७]

नदत्सु तूर्येष्वविभाव्यवाचो नोदीरयन्ति स्म कुलोपदेशान् ।
बाणाक्षरैरेव परस्परस्य नामोर्जितं चापभृतः शशंसुः ॥ -रघु० ७-३८

---

६ 'शस्त्रविशेषा तत्प्रभावा च' इत्येतस्मिन् उपप्रकरणे विविधानाम् शस्त्राणाम् निर्देशा, उपयोगाः च दृश्यन्ते । एषु प्रधानाः (१) 'भल्ल' (रघु० ४-६३) (२) शतघ्नी (रघु० १२-९५) (३) अर्धचन्द्रमुखबाणाः (रघु० १२-९६), (४) शूलः (रघु १५-१७) (५) 'धनुष्य-बाण-असि-इत्यादयः च कालिदासेन उद्धृता शस्त्रविशेषा । अत्रापि समानशस्त्राणाम् एव अस्त्रवत्, एकस्य शस्त्रस्य प्रयोगे क्रियमाणे अन्येन तस्य उपरि अन्यस्य शस्त्रस्य उपयोग (रघु० १२ ९५-९६) अत्र ज्ञातु शक्यते । शस्त्रविशेषाणा प्रभावो मा भवतु इत्येतदर्थं तनुच्छद-कवच-वर्म-इत्यादय शरीराच्छादनपराणि रक्षासाधनानि अपि तत्र तत्र निर्दिष्टानि ।

७. 'साक्षात् सङ्ग्रामवर्णनम्' इत्यस्मिन् उपप्रकरणे समराङ्गणे सैनिकाना व्यवहारादिक ज्ञायते । 'सैनिकै स्वस्वकुलाना पाभिधाना जयघोष क्रियते स्म,

रथो रथाङ्गध्वनिना विजज्ञे विलोलघण्टाक्वणितेन नागः ।
स्वभर्तृनामग्रहणाद्बभूव सान्द्रे रजस्यात्मपरावबोधः ॥ –रघु० ७-४१

प्रहारमूर्च्छापगमे रथस्था यन्तॄनुपालभ्य निवर्तिताश्वान् ।
यैः सादिता लक्षितपूर्वकेतूंस्तानेव सामर्षतया निजघ्नुः ॥
–रघु० ७-४४

तनुत्यजां वर्मभृतां विकोशैर्बृहत्सु दन्तेष्वसिभिः पतद्भिः ।
उद्यन्तमग्निं शमयाम्बभूवुर्गजा विविग्नाः करशीकरेण ॥ –रघु० ७-४८

अन्योन्यसूतोन्मथनादभूतां तावेव सूतौ रथिनौ च कौचित् ।
व्यश्वौ गदाव्यायतसम्प्रहारौ भग्नायुधौ बाहुविमर्दनिष्ठौ ॥
–रघु० ७-५२

ततो धनुष्कर्षणमूढहस्तमेकांसपर्यस्तशिरस्त्रजालम् ।
तस्थौ ध्वजस्तम्भनिषण्णदेहं निद्राविधेयं नरदेवसैन्यम् ॥ –रघु० ७-६२

रथी निषङ्गी कवची धनुष्मान् दृप्तः स राजन्यकमेकवीरः ।
निवारयामास महावराहः कल्पक्षयोद्वृत्तमिवार्णवाम्भः ॥ –रघु० ७-५६

स शोणितैस्तेन शिलीमुखाग्रैर्निक्षेपिताः केतुषु पार्थिवानाम् ।
यशो हृतं सम्प्रति राघवेण न जीवितं वः कृपयेति वर्णाः ॥
–रघु० ७-६५

शङ्खस्वनाभिज्ञतया निवृत्तास्तं सन्नशत्रुं ददृशुः स्वयोधाः ।
निमीलितानामिव पङ्कजानां मध्ये स्फुरन्तं प्रतिमाशशाङ्कम् ॥ –रघु० ७-६४

---

इति एतत् (रघु० ७-३८, ४१) इत्यत्र अजस्य युद्धवर्णनावसरे विस्तरेण वर्णितम् । सूतस्य नाशे स्वयम् एव सूतत्वम् सम्पादनीयम्, आयुधेषु भग्नेषु सत्सु, बाहुभ्यामेव युद्धम् निर्वर्तनीयम्, परम् युद्धात् न परावर्तनीयम् इत्यादि (रघु० ७-५२) इत्यादिषु स्थलेषु सम्यक् वर्णितम् । मध्ये मध्ये यथा जयघोष तथैव जयप्राप्त्यनन्तर शङ्ख-निनादः आसीत् इति (रघु० ७ ६३-६४) इत्यत्र सम्यक् वर्णितम् । साक्षात्समर-प्रसङ्गे अपि शत्रूणा शरीरनाशापेक्षया यशस अपहरणम् एव वरम् इति एतत्

ततः प्रियोपात्तरसेऽधरोष्ठे निवेश्य दध्मौ जलजं कुमारः ।
तेन स्वहस्तार्जितमेकवीरः पिबन् यशो मूर्तमिवाबभासे ॥ -रघु० ७-६३

कूटयुद्धम्[८]

कूटयुद्धविधिज्ञेऽपि तस्मिन् सन्मार्गयोधिनि ।
भेजेऽभिसारिकावृत्तिं जयश्रीर्वीरगामिनी ॥ -रघु० १७-६९

यः सुबाहुरिति राक्षसोऽपरस्तत्र तत्र विससर्प मायया ।
तं क्षुरप्रशकलीकृतं कृती पत्रिणां व्यभजदाश्रमाद्बहिः -रघु०

रक्षसा मृगरूपेण वञ्चयित्वा स राघवौ ।
जहार सीतां पक्षीन्द्रप्रयासक्षणविघ्नितः -रघु० १२-५३

अथ रामशिरश्छेददर्शनोद्भ्रान्तचेतनाम् ।
सीतां मायेति शंसन्ती त्रिजटा समजीवयत् ॥ -रघु० १२-७४

---

'यशो हृतं सम्प्रति राघवेण न जीवितं वः कृपयेति वर्णाः । (रघु० ७-६५)' इत्यत्र सम्यक् उक्तम् ।

८. '**कूटयुद्धम्**' अस्मिन् उपप्रकरणे कूटयुद्धेन–मायया वा शत्रून् वञ्चयित्वा विजयश्री सम्पादनीया इत्येतद्दर्शकानि वचनानि अत्र सङ्गृह्यन्ते । 'कूटयुद्धज्ञानम् अत्यन्तम् आवश्यकम्, परम् प्रवृत्तिः तु धर्मयुद्धेन एव भवतु' इति एतत् (रघु० १७-६९) इत्यत्र सम्यक् प्रदर्शितम् । मायाप्रवृत्तिविषये रक्षसाम् एव वर्णनं प्राय तत्र तत्र समुपलभ्यते । शाकुन्तले षष्ठे अङ्के राज्ञः उक्तिः – भो **तिरस्करिणीगर्वित**, मदीयं शस्त्रं त्वां द्रक्ष्यति' इति (शाकु० ६-२८) । अत्र तिरस्करिण्या उपयोगः अपि कूटयुद्धसदृशः मायाप्रकारः वा इति स्पष्टं भवति । मायया इतस्ततः सञ्चरणम् (रघु० ११-२९), मृगादिरूपेण परेषां वञ्चनम् (रघु० १२-५३), प्रथमम् कोकिलादिसदृशः मञ्जुलः ध्वनिः अनन्तरम् शिवादिवत् घोरः स्वनः (रघु० १२-३९), जीवति अपि शत्रौ तन्मरणं सञ्जातम् इति दर्शयितुं तच्छिरस

लक्ष्मणः **प्रथमं श्रुत्वा कोकिलामञ्जुवादिनीम्** ।
**शिवाघोरस्वनां** पश्चाद्बुबुधे विकृतेति ताम् ॥ -रघु० १२-३९

<u>ध्वजकेतवः</u> [१]

वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान् ।
निचखान **जयस्तम्भान्** गङ्गास्रोतोऽन्तरेषु सः ॥ -रघु० ४-३६

स ययौ प्रथमं प्राचीं तुल्य प्राचीनबर्हिषा ।
अहिताननिलोद्धूतैस्तर्जयन्निव **केतुभिः** ॥ -रघु० ४-२८

अथोपशल्ये रिपुमग्नशल्यस्तस्याः पुरः पौरसखः स राजा ।
कुलध्वजस्तानि **चलध्वजानि** निवेशयामास बली बलानि ॥ -रघु० १६-३७

यन्ता हरेः सपदि संहृतकार्मुकज्यम्
आपृच्छ्य राघवमनुष्ठितदेवकार्यम् ।
**नामाङ्करावणशराङ्कितकेतुयष्टिम्**
ऊर्ध्वं रथं हरिसहस्रयुजं निनाय ॥ रघु० १२-१०३

ततो धनुष्कर्षणमूढहस्तमेकांसपर्यस्तशिरस्त्रजालम् ।
तस्थौ **ध्वजस्तम्भ**निषण्णदेहं निद्राविधेयं नरदेवसैन्यम् ॥ -रघु० ७-६२

---

प्रदर्शितम् (रघु० १२-७४) इत्यादिभि बहुभि उपायैं मायाविरूपाणाम् प्रकटन दृश्यते ।

१ '**ध्वजकेतव**'—इत्यस्मिन् उपप्रकरणे ध्वजाना केतूना च निर्देशपराणि वचनानि सङ्गृह्यन्ते । सेनासु प्रतिसैनिकम् ध्वज अथवा केतु आसीत् इत्येतत् 'कुलध्वज तान् चलध्वजान् (रघु० १६-३७)', 'नरदेवसैन्यम् ध्वजस्तम्भनिषण्णदेह तस्थौ (रघु० ७-६२)' इत्यादिभि स्पष्टतया ज्ञातु शक्येत । ध्वजाना केतूना च विशेषा तत्तेषा नृपाणा राज्याना च परम्परानुसारम् वैशिष्ट्यानुसारम् आसन् इत्येतत् '**मत्स्यध्वजा** (रघु० ७-४०) इत्यनेन ज्ञातु शक्यते । प्रधानानाम् अमात्यादीनाम् नृपाणा च पृथगाकारा ध्वजा आसन् इति अनुमातु शक्यते । विजयप्राप्त्यनन्तर तत्र

मत्स्यध्वजा वायुवशाद्विदीर्णैर्मुखैः प्रवृद्धध्वजिनीरजांसि ।
बभुः पिबन्तः परमार्थमत्स्याः पर्याविलानीव नवोदकानि ॥ -रघु० ७-४०

## युद्धे मृतानां विशिष्टा उत्तरक्रिया[10]

तं विनिष्पिष्य काकुत्स्थौ पुरा दूषयति स्थलीम् ।
गन्धेनाशुचिना चेति वसुधायां निचख्नतुः ॥ -रघु० १२-३०

## विशिष्ट-हिंसा-प्रतिषेधः[11]

तमापतन्तं नृपतेरवध्यो वन्यः करीति श्रुतवान् कुमारः ।
निवर्तयिष्यन् विशिखेन कुम्भे जघान नात्यायतकृष्टशार्ङ्गः ॥ -रघु० ५-५०

नृपतेः प्रतिषिद्धमेव तत्कृतवान् पङ्क्तिरथो विलङ्घ्य तत् ।
अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः ॥ -रघु० ९-७४

न प्रहर्तुमलमस्मि निर्दयं 'विप्र' इत्यभिभवत्यपि त्वयि ।
शंस किं गतिमनेन पत्त्रिणा हन्मि लोकमुत ते मखार्जितम् ॥ -रघु० ११-८४

---

तत्र प्रदर्शितेषु स्वस्य जयस्तम्भादिप्रतिष्ठापनम् अपि साम्यात् साधर्म्यात् च अत्र सङ्ग्रह्यते—'रघु जयस्तम्भान् गङ्गास्रोतोन्तरेषु निचखान' (रघु० ४-३६) ।

१० 'युद्धे मृतानां विशिष्टा उत्तरक्रिया' अस्मिन् उपप्रकरणे युद्धे मृतानां शत्रूणां वसुधायां खनित्वा निक्षेपः कर्तव्यः, यतः, अशुचिः गन्धः सर्वत्र मा भवतु' इति एतत् (रघु० १२-३०) इत्यत्र सम्यक् वर्णितम् । सामान्यतः स्वपक्षीयाणां समादरणीयानां कृते अग्निसात्करणं आसीत् इति तु जटायुषः वर्णनेन ज्ञातुं शक्यते (रघु० ११-५६) ।

११ विशिष्टहिंसाप्रतिषेध—अस्मात् उपप्रकरणात् वन्यः गजः (रघु० ५-५०), अपकारी अपि विप्रः (रघु० ११-८४), तपस्विभिः संरक्षिताः मृगादिकाः,

भोः भोः राजन्, आश्रममृगोऽयं न हन्तव्यः न हन्तव्यः।
-शाकु० १, पृ. २०

उद्यतैकभुजयष्टिमायतीं श्रोणिलम्बिपुरुषान्त्रमेखलाम्।
तां विलोक्य वनितावधे घृणां पत्रिणा सह मुमोच राघवः ॥
-रघु० ११-१७

---

(शाकुं० १ पृ. २०), वनिताः च (रघु० ११-१७) न हन्तव्याः इति सामान्यतः ज्ञातुं शक्यते। यद्यपि रामेण ताडकाया वधः कृत. तथापि कस्याः अपि अबलायाः वध. अधर्मः एव इति कथने एव तात्पर्यं वर्तते। (रघु० ११-१७)।

## प्रथमम् परिशिष्टम्

# वचनानाम् अकाराद्यनुक्रमेण सूचिः

### अ

द



न



प

## स

## द्वितीयम् परिशिष्टम्

# विशिष्टपारिभाषिकशब्दाः

[ Some Political terms in कालिदास. ]

(१) अधिकारपुरुष—An officer

(२) अनन्तरनृपति—The neighbouring king in द्वादशराजमण्डल [ see page 65 ]

(३) अन्तपाल—Frontier guard

(४) अनुयात्रिक—Attendant—(one who follows the king going for दिग्विजय)

(५) अभियायिन्—One who attacks

(६) अभिसन्धि—Condition between two kings

(७) अरिमण्डल—Circle of enemies

(८) आत्मविसृष्टग्राम—Village granted as free gift to sacrificers (who were expected to perform the sacrifices out of the revenues therefrom)

(९) उञ्छषष्ठ—The sixth portion of the gleaned corn

(१०) उत्साहशक्ति—Energy (one of the three welknown शक्तिs)

(११) उपदा—Present or offering to a king

(१२) उपाय—The four expedients against enemy

(१३) कर—Tax

(१४) कूटयुद्ध—A treachereous fight

(१५) चतुःस्कन्धा—(Army) having four squadrons.

(१६) त्रिसाधना (शक्ति)—Kingly power, consisting of three-fold means

(१७) दण्ड—Force

(१८) दण्डचक्र—Army

(१९) दान—Bribery.

(२०) दुर्ग—Fort.

(२१) दुर्गपाल—*Officer in the fort.*

(२२) द्वैराज्य—Joint rule.

(२३) धर्मासन—The Throne of justice

(२४) नियोग—Inevitableness.

(२५) नृपमण्डल—Circle of twelve kings called द्वादशराजमण्डल.
[ see page 65 ].

(२६) पणबन्ध—Making a treaty.

(२७) परातिसन्धान }
(२८) पराभिसन्धान } —Deceiving in political sense.

(२९) पार्ष्णि—Rear side of विजिगीषु king in द्वादशराजमण्डल.

(३०) प्रकृति—Subjects.

(३१) प्रकृतिमण्डल—The entire kingdom ( consisting of अमात्य, सुहृद्, प्रजा etc. )

(३२) प्रकृत्यमित्र—Natural enemy ( see the position of अरि in द्वादशराजमण्डल ).

(३३) प्रभुशक्ति—One of the three शक्तिs.

(३४) प्रयाण—The march against enemy.

(३५) प्राश्निक—Justice.

(३६) बलि—Tax

(३७) भेद—Seduction—(one of the four नीतिs).

(३८) *मण्डलनाभि—The prominent king among the circle* twelve Kings See विजिगीषु in द्वादशराजमण्डल page 65

(३९) मध्यम }
(४०) मध्यस्थ } —Neutral, impartial king. [ see the adjecents sides of the विजिगीषु king. Page 65 ].

(४१) मध्यमशक्ति–Possessing moderate power–(see the position of मित्र in द्वादशराजमण्डल page 65).

(४२) मन्त्र–Councel.

(४३) मन्त्रिन्–Minister

(४४) मन्त्रिपरिषद्–Council

(४५) यात्रा–March against enemy

(४६) रन्ध्र–Weak-point

(४७) राजमण्डल–Circle of Kings (see page 65)

(४८) लोकतन्त्र–Governing the People

(४९) वृत्त–The duties of a King.

(५०) व्यवहार–Administration of Justice.

(५१) व्यवहारासन–The court of justice

(५२) शक्ति–Regal power

(५३) शक्तित्रय–Three powers—(i) प्रभुशक्ति, (ii) मन्त्रशक्ति and (iii) उत्साहशक्ति

(५४) शुद्धपार्ष्णि–With his rear clear (of the foes) [ refer page 65 for the position of पार्ष्णि ]

(५५) षड्भाग
(५६) षष्ठांश } The sixth portion of the produce of the earth.

(५७) षड्गुण–The six expedients (namely सन्धि, विग्रह, यान, आसन, द्वैध, आश्रय)

(५८) सप्ताङ्ग–The seven elements of the state (namely स्वामी, अमात्य, सुहृद्, कोश, राष्ट्र, दुर्ग, बल)

(५९) सन्धि–Treaty (one of the six उपायs)

(६०) सामन्–Conciliation (one of the four नीतिs)

(६१) सामन्त–Feudatory King